# Sahitya Ratnamanjusha.



BY

**Pandit R. V. KRISHNAMACHARIAR**

(ABHINAVA BHATTA BANA.)



SRIRANGAM

SRI VANI VILAS PRESS.

1908.

॥ श्रीः ॥



# ॥ साहित्यरत्नमञ्जूषा ॥

" अभिनवभट्टबाण शब्दतर्कालंकारविद्याभूषण "

विरुदभाजा वात्स्यचक्रवर्तिना

**श्रीकृष्णसूरिणा**

संकलिता



श्रीरङ्गनगरे

श्रीवाणीविलासमुद्रायन्त्रालये

समुद्रिता ।

१९०८.

# PREFACE.

THIS is the first publication of its kind in Sanskrit and it is hoped that it will be duly appreciated by the Public. English students surely value such quotations very much as is evidenced by the numerous publications *viz.*, 'the Cameos of English Literature', 'Half hours with the Best Authors', 'Bartlett's Familiar Quotations', 'Dodd's Beauties of Shakespeare', etc. etc. Now that there is a revival of Sanskrit learning and the Universities also desire a greater mastery of the Sanskrit language, such a publication as this will greatly help the students in their 'Composition' and 'Translation'. The method of utilising such quotations in compositions is shewn in the *Bhumika*, wherein several apt sayings have been specially requisitioned. If this book meets with an encouraging reception, the 2nd edition will be greatly improved and the quotations will be arranged therein in the order of the subject-matter Being the first attempt of its kind done in great haste, some mistakes might have crept in and some more sayings might have escaped notice but these will certainly be rectified in the next edition. Similar gems from Ramayana will be published ere long with the full hope that such ventures in novel and useful directions will meet with the encouragement which they deserve.

SRIRANGAM, }
17th May 1908. }

*T. K. Balasubrahmanyam.*

॥ श्रीः ॥

# भूमिका ।

सरसः खल्वयं कोऽपि मनसो विनोदः; यद्भावुकस्य सति समये साहित्यकलासंशीलनं नाम । तत्रापि सादरमुपासीनस्य रसिकस्य सागर इव सांयात्रिकस्य समुज्ज्वलानामनघार्णा नव तत्र विद्यमानानां गद्यानां पद्यानां च रत्नानां समुपलम्भ इति सत्यमेवायमानन्दहेतुर्ननु भवति परमो लाभः। इदं किल जिघृक्षूणामिव तत्परिशीलिनामतीव तोषावहम्; यदुत विप्रकीर्णानि तानि रत्नानि ततस्ततः संचित्य रत्नापण इव कुत्रचिदेकत्र समुह्य संदर्शनं नाम । एतदेवमाशयानैरेव च महाशयैर्बहुभिराङ्गलभाषादिष्वेवंविधा अनेकाः प्रबन्धमालाः सन्ति संग्रथिताः । 'सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः ।' 'शक्याशक्यपरिसंख्यानशून्याः प्रायेण स्वार्थतृषः ।' अत एव च पर्याप्तमवसरमलभमानोऽप्यहमखिलादपि साहि-

त्यनिबन्धादेतादृशानि रत्नान्युद्धरेयमिति मन्यमानो महत्यस्मिन्कर्मणि 'प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः' चिरादिव प्रावर्तिषि ।

उद्धृतानि च बहूनि रत्नानि गद्यानि पद्यानि चानेकेभ्यो नाटकेभ्यश्चम्पूग्रन्थेभ्यः काव्येभ्यः पुराणेभ्य इतिहासेभ्यश्च । यतः 'अनुसरति खलूत्साहमभिलषितसिद्धिः ।' आदिमः खल्वयमेतादृशस्य नाम प्रबन्धस्य गैर्वाण्यामवतारः । न किल वयमवगच्छामः, कथंनु नाम भावुकानामिदंप्रथमेऽस्मिन्मनोबन्ध इति । 'सर्वः कान्तमात्मीयं पश्यति ।' 'उत्सर्पिणी खलु जगतः प्रार्थना ।' न खलु 'आत्मनो हृदयानुमानेन दर्शनं सांप्रतम् ।' 'नास्त्यगतिर्मनोरथानाम् ।' 'आत्मकृतं चापलमप्रतिहतं दहति' 'अविमृश्यकारिता हि पुंसः परं परिभवस्थानम् ।' इत्येवं बहुधा विमृश्य परिमितमेव प्रकाश्यते सांप्रतम् । यथा वा—नाटकेषु विंशतिरेव प्रथितानि तानि, काव्येषु च पञ्चैव सुप्रसिद्धानि तानि, परमेको मेघसंदेशः, गद्यकाव्यानि परमेनावना बहिरवर्तीर्णानि सर्वाणि मया गृहीतानि ।

तत्रापि प्रबन्धस्यावयवोपचये महान्किल द्रव्यव्ययः करणीयो भविष्यतीति भीरुणा मया पुनरुक्तप्रायाणि क्वचिद्तथाविधान्यपि रत्नानि बुद्धिपूर्वकमुपेक्षितानि। 'न हि सर्वः सर्वं जानाति।' कानिचिच्च मृच्छकटिकादिष्वनवधानेन कतिचन पद्यान्यविदितमनुद्धृतानि। स्वो हि भावो मर्त्यधर्मणः प्रमादो नाम। अनेन च पद्यामां बहिरवतीर्णेन पुस्तकेनः कीदृशी वा मनःप्रवृत्तिरत्र भावुकानामिति। 'न खल्वखिलमपि निघृष्यते सुवर्णखण्डं वर्णनिष्कर्षाय।' यदि बध्नन्ति सहृदया अनुकूलमत्र भावबन्धम; यदि चात्र प्रवृत्तो नाहमनुभवेयं द्रव्यतः क्लेशम; यदि च दैवमेकान्ततो न विरोधिः तर्हि न चिरादेव तानि च प्रकाशयेरन, यानि पुनरेतैर्दिवसैः सन्ति संचितानि; यानि चात्र पुस्तके बुद्धितः प्रमादतो वा विसृष्टानि रत्नानि।

अस्ति मे दृढीयान्विश्वासः, यद्रसिकैर्महाशयैरनैकध्यमुत्साह्यमानोऽहं सांप्रतं सज्जीकृतानि श्रीरामायणरत्नानि नातिचिरादिव प्रकाशयितुं प्रभवेयमिति। यतो 'बालविद्याः खलु महतामुपकृतयः।' 'नहि प्रतिकृतिसव्यपेक्षाः प्रेक्षावता-

मुपक्रृतयः ।' 'अक्षीणः खलु दाक्षिण्यकोशो महताम् ।' 'उचितकारित्वे श्रुतशिक्षितानि महाभागजनचरित्राणि ।' विनीतवेषप्रविष्टानां 'केषां न स्यादभिमतफला प्रार्थनाभ्युन्नतेषु' अत्र च प्रयतमानेन क्वचित्क्वचिद्वाक्यमध्यात्तावानेव भागः स्वीकृतो मया. यावता तदिदं सामान्यं भविष्यति ।

यदा चास्य मुद्राप्यमाणस्यार्धमवसितम्; तदा कतिचन महाशया एतत्पश्यन्तो विषयविभागेन विनिवेशनमुचितमित्यभिप्रायमात्मीयमावेदयामासुः । तथापि किं क्रियताम् । अन्यथा खल्वारभ्य सुदूरमासीद्गतम् । इदं चापि मे मनसि वर्तते, यदिदानीं पृथक्पृथग्विन्यसनेन, एतत्पठनमात्रेणापि, कालिदासः केवलं शब्दार्थयोर्दृष्टिमनाबध्नन् रसभावतात्पर्येष्वेकान्ततो मानसमुपयुञ्जानः कश्चिन्महाकविरिति, व्यङ्ग्यसरणेः कचित्कचित्प्रच्युतापि भावपुष्टा तत्तद्रसानुगुणपदगुम्भनभासुरा भवभूतिभारतीति, अनुभवसहोदरप्रत्ययोत्पादकमन्यादृशमप्रतिहतप्रसरमखिलशब्दप्रपञ्चब्रह्मणो बाणभट्टस्य सुभाषितमिति, अन्येषां च प्रायेण श्रीहर्षादीनां नैषधादीनि काव्यानि-क्लिष्टाशयानि तात्पर्यावेदकपददरिद्राणि पुनः पुनरुपयुक्तपद-

भावादिकलुषाणि केवलं कविपाण्डित्यशास्त्रसंस्कारमात्रप्रका-शनाय हठान्निबद्धानीति च यथा वा भावुकानां मनसि स्फुरिष्यति; न तथा भविष्यति विषयविभेदेन विप्रकीर्णतया तत्तत्कविगद्यपद्यानामेकत्र योजन इति । तदा हि तथा विनिवेशः सुकरश्चाशासनीयश्च; यदि प्रबन्धः केवलमेकः, यदि वा बहूनामपि प्रबन्धानामेक एव कविः । यदि च बहुभ्यो रोचते सहृदयेभ्यस्तथैव विन्यसनफक्किका; नियतमयमहं सज्जस्तथाकरणाय द्वितीयस्यां मुद्रणावृत्तौ । अत्र च विषये साह्यमाहितवते विशेषतः पाणिनीयं परिचेतुं मदन्तिकमागताय श्रीनारायणशास्त्रिणे सुबहु धार्यते मया ।

इति

श्रीवत्सचक्रवर्ती

अभिनवभट्टबाणः

**कृष्णमाचार्यः ।**

श्रीः ॥

# ॥ साहित्यरत्नमञ्जूषा ॥



## शाकुन्तलम् ।

विनीतवेषप्रवेश्यानि तपोवनानि नाम ।

अस्त्येतदन्यसमाधिभीरुत्वं देवानाम् ।

अनियन्त्रणानुयोगस्तपस्विजनो नाम ।

अहो चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः ।

गण्डस्योपरि पिटका संवृत्ता ।

एवमात्माभिप्रायसंभावितेष्टजनचित्तवृत्तिः प्रार्थयिता जनो विड-
म्ब्यते

कुतः किल स्वयमक्षिणी आकुलीकृत्याश्रुकारणं पृच्छसि

सर्वः कान्तमात्मीयं पश्यति ।

पिण्डखर्जूरैरुद्वेजितस्य तिन्त्रिण्यामभिलाषो भवेत् ।

त्रिशङ्कुरिवान्तराले तिष्ठ ।

विकारं खलु परमार्थतोऽज्ञात्वानारम्भः प्रतीकारस्य ।

स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति ।

सागरमुज्झित्वा कुत्र वा महानद्यवतरति ।

क इदानीं सहकारमन्तरेण पल्लवितामतिमुक्तलतामर्हति ।

को वा शरीरनिर्वापयित्रीं शारदीं ज्योत्स्नां पटान्तेन निवारयिष्यति ।

विवक्षितं ह्यनुक्तमनुतापं जनयति ।

अहो विघ्नवत्यः प्रार्थितार्थसिद्धयः ।

न तादृशा आकृतिविशेषा गुणविरोधिनो भवन्ति ।

गुणवते कन्यका प्रतिपादनीया ।

कोऽन्यो हुतवहाद्दग्धुं प्रभविष्यति ।

प्रकृतिवक्रः स कस्यानुनयं गृह्णाति ।

को नामोष्णोदकेन नवमालिकां सिञ्चति ।

दिष्ट्या धूमावरुद्धदृष्टेरपि यजमानस्य पावक एवाहुतिः पतिता

सुशिष्यपरिदत्ता विद्येवाशोचनीयासि संवृत्ता ।

ओदकान्तं स्निग्धो जनोऽनुगन्तव्यः ।

न खलु धीमतां कश्चिदविषयो नाम ।

अतिस्नेहः पापशङ्की ।

अविश्रमोऽयं लोकतन्त्राधिकारः ।

सर्वः प्रार्थितमर्थमधिगम्य सुखी संपद्यते जन्तुः ।

अनिर्वर्णनीयं परकलत्रम् ।

स्वाधीनकुशलाः सिद्धिमन्तः ।

प्रत्युत्पन्नमति स्त्रैणम् ।

सर्वः सगन्धेषु विश्वसिति ।

आत्मनो हृदयानुमानेन पश्यसि ।

क इदानीमन्यो धर्मकञ्चुकप्रवेशिनस्तृणच्छन्नकूपोपमस्य तवानुकृतिं प्रतिपत्स्यते ।

आत्मकृतं चापलमप्रतिहतं दहति ।

नन्ववसरोपसर्पणीया राजानः ।

एष यमसदनं प्रविश्य प्रतिनिवृत्तः ।

एष नामानुगृहीतः, यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः ।

उत्सवप्रियाः खलु मानुषाः ।

अहो सर्वास्ववस्थासु रमणीयत्वमाकृतिविशेषाणाम् ।

रन्ध्रोपनिपातिनोऽनर्थाः ।

भवितव्यता खलु बलवती ।

न कदापि सत्पुरुषाः शोकपात्रात्मानो भवन्ति ।

ननु प्रवातेऽपि निष्कम्पा गिरयः ।

कः पतिदेवतामन्यः परामर्ष्टुमुत्सहते ।

न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं द्रष्टुं पारयतः ।

अवश्यंभाविनोऽचिन्तनीयः समागमो भवति ।

एषोऽत्रभवान्नदीमतिक्रम्य मृगतृष्णिकायां संक्रान्तः ।

ननु गर्भः पित्र्यं रिक्थमर्हति ।

संततिच्छेदनिरवलम्बानां कुलानां मूलपुरुषावसाने संपदः परमुपतिष्ठन्ति ।

सति खलु दीपे व्यवधानदोषेणैषोऽन्धकारमनुभवति ।

अनतिक्रमणीयानि श्रेयांसि ।

उत्सर्पिणी खलु महतां प्रार्थना ।

अन्याय्यः परदाराणां व्यवहारः ।

किमीश्वराणां परोक्षं नाम ।

## विक्रमोर्वशीयम् ।

अभिजातं खल्वस्य वचनम् । अथवा चन्द्रादमृतमिति किमत्राश्चर्यम् ।

अनुत्सेकः खलु विक्रमालङ्कारः ।

अहो नु खलु दुर्लभाभिनिवेशी मदनः ।

विरलतृणलग्नमवश्यायसलिलमिव चिरं तस्मिन् रहस्यं तिष्ठति ।

अतिस्नेहः खलु कार्यदर्शी ।

नास्त्यगतिर्मनोरथानाम् ।

ननु प्रथमं मेघराजिर्दृश्यते, पश्चाद्विद्युल्लता ।

सर्वत्र प्रमादी वैधेय: ।

लोप्त्रेण गृहीतस्य कुम्भीलकस्यास्ति ना प्रतिवचनम् ।

न खल्वक्षिदु:खितोऽभिमुखे दीपशिखां सहते ।

भवितव्यतानुविधायीनि बुद्धीन्द्रियाणि ।

सर्वत्रौदरिकस्याभ्यवहार्यमेव विषय: ।

शक्यमाशाबन्धेनात्मानं धारयितुम् ।

अन्यसंक्रान्तप्रेमाणो नागरका अधिकं दक्षिणा भवन्ति ।

न युक्तं सुभाषितं प्रत्याचरितुम् ।

छिन्नबन्धे मत्स्ये पलायिते निर्विण्णो धीवरो भणति. धर्मो मे भविष्यतीति ।

दूरारूढ: खलु प्रणयोऽसहन: ।

नास्ति विधेरलङ्घनीयम् ।

नादृशा आकृतिविशेषाश्चिरं दु:खभागिनो न भवन्ति ।

अये परावृत्तभागधेयानां दु:खं दु:खानुबन्धि ।

अनिर्वेदप्राप्याणि श्रेयांसि ।

परिभवास्पदं दशाविपर्यय: ।

को देवतारहस्यानि तर्कयिष्यति ।

नार्हति तात: पुंगवधारितायां धुरि दम्यं नियोजयितुम् ।

# मालविकाग्निमित्रम् ।

नन्वाकृतिविशेषेष्वादरः पदं करोति ।

कामं खलु सर्वस्य कुलविद्या बहुमता ।

अहो दुरासदो राजमहिमा ।

पत्तने सति ग्रामे रत्नपरीक्षा ।

अन्योन्यकलहितयोर्मत्तहस्तिनोरेकतरस्मिन्ननिर्जिते कुत उपशमः

विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति ।

अपरिनिष्ठितस्योपदेशस्यान्याय्यं प्रदर्शनम् ।

सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

सुशिक्षितोऽपि न सर्व उपदेशदर्शने निपुणो भवति ।

प्रभवत्याचार्यः शिष्यजनस्य ।

उपस्थितं नयनमधु संनिहितमक्षिकं च ।

अहो सर्वास्ववस्थास्वनवद्यता रूपस्य ।

अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति ।

मया नाम शुष्कघनगर्जितेऽन्तरिक्षे जलपानमिच्छता चातकायितम् ।

पण्डितपरितोषप्रत्यया ननु मूढा जातिः ।

साधु । त्वं दरिद्र आतुर इव वैद्येनोपनीयमानमौषधमिच्छसि

उचितवेलातिक्रमे चिकित्सका दोषमुदाहरन्ति ।

भवानपि सूनोपरिचरो गृध्र इवामिषलोलुपो भीरुकश्च ।

निसर्गनिपुणाः स्त्रियः ।

ही ही इयं खलु शीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता ।

न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः ।

मदः किल स्त्रीजनस्य सविशेषं मण्डनम् ।

चूताङ्कुरं विचिन्वत्योरावयोः पिपीलिकाभिर्दष्टम् ।

अनुरागोऽनुरागेण परीक्षितव्यः ।

भ्रमरसंबाध इति वसन्तावतारसर्वस्वभूतः किं न चूतप्रसवोऽवतंसनीयः ।

अहो अविश्वसनीयाः पुरुषाः ।

कर्मगृहीतेन कुम्भीलकेन सन्धिच्छेदनं शिक्षितोऽस्मीति वक्तव्यं भवति ।

न शोभते प्रणयिजने निरपेक्षता ।

अविषोऽपि कदाचिद्दंशो भवेत् ।

अहो कुम्भीलकैः कामुकैरपि परिहरणीया खलु चन्द्रिका ।

कुतूहलवानपि निसर्गशालीनः स्त्रीजनः ।

रमणीयः खलु नवाङ्गनानां मदनविषयावतारः ।

विपणिगत इव वृषभ आसीन एवार्यगौतमो निद्रायते ।

किं नु खलु दर्दुरा व्याहरन्तीति देवः पृथिवीं वर्षितुं स्मरति ।

बन्धनस्थितो गृहकपोतको बिडालिकालोके पतितः ।

कातरो बालभावः ।

आगामि सुखं वा दुःखं वा हृदयं समर्थीकरोति ।

चन्दनं खलु मया पादुकापरिभोगेण दूषितम् ।

अहो परिभवोपहारिणो विनिपाताः ।

सर्वोऽपि नववरो लज्जातुरो भवति ।

## उत्तररामचरितम् ।

संतापकारिणो बन्धुजनविप्रयोगा भवन्ति ।

एते हि हृदयमर्मच्छिदः संसारभागाः, येभ्यो बीभत्समानाः संत्यज्य सर्वान्कामानरण्ये विश्राम्यन्ति मनीषिणः ।

दुर्जनोऽसुखमुत्पादयति ।

न राजापचारमन्तरेण प्रजानामकालमृत्युः संचरति ।

अनवस्थितो भूतसंनिवेशः ।

उचितमेव दाक्षिण्यं स्नेहस्य ।

प्रसवः खलु प्रकर्षपर्यन्तः स्नेहस्य, परं चैतदन्योन्यसंश्लेषणं पित्रोः ।

कर्तव्यानि खलु दुःखितैर्दुःखनिर्धारणानि ।

कियच्चिरं वा मेघान्तरेण पूर्णचन्द्रस्य दर्शनम् ।

अन्धतामिस्रा ह्यसूर्या नाम ते लोकाः प्रेत्य तेभ्यः प्रतिविधीयन्ते, य आत्मघातिनः ।

सुलभसौख्यमिदानीं बालत्वं भवति ।

भिद्यते वा सद्वृत्तमीदृशस्य निर्माणस्य ?

भूयसां जीविनामेव धर्म एषः, यत्स्वरसमयी कस्य चित्क्वचित्प्रीतिः; यत्र लौकिकानामुपचारस्तारामैत्रकं चक्षूराग इति ।

को विचारः स्वेषूपकरणेषु ।

सर्वमतिमात्रं दोषाय ।

स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् ।

साक्षात्कृतब्रह्माणो महर्षयः, तेषामृतंभराणि भगवतां परोरजांसि प्रज्ञानानि न क्वचिद्व्याहन्यन्त इत्यनभिशङ्कनीयानि ।

सर्वसाधारणो ह्येष मोहग्रन्थिरान्तरश्चेतनावतामनुपप्लवः संसारतन्तुः ।

अव्याहतान्तःप्रकाशा हि देवतास्तत्त्वेषु ।

आपातदुःसहः स्नेहसंवेगः ।

सकरुणा हि गुरवो गर्भरूपेषु ।

सानुषङ्गाणि कल्याणानि ।

# मालतीमाधवम् ।

स्नेहश्च निमित्तसव्यपेक्षश्चेति विप्रतिषिद्धमेतत् ।

न खलु तादृश्यो महाभागधेयजन्मानोऽन्यत्रासक्तचेतसो भूत्वा परत्र चक्षूरागिण्यो भवन्ति ।

प्रत्यक्षसौख्यदायिनः परोक्षदुःखदुःसहाः सज्जनसमागमा भवन्ति ।

श्लाघनीयं दुर्लभमनोरथफलं जीवलोकस्य, यद्गुरुकानुरागसदृशो महाभागवल्लभसमागमः ।

इतरेतरानुरागो हि विवाहकर्मणि परार्ध्यं मङ्गलम् ।

यस्यां मनश्चक्षुषोर्निबन्धः, तस्यामृद्धिः ।

प्रभवति प्रायः कुमारीणां जनयिता दैवं च ।

कुतो वा महोदधिं वर्जयित्वा पारिजातस्योद्गमः ।

वाक्प्रतिष्ठानि देहिनां व्यवहारतन्त्राणि ।

वाचि पुण्यापुण्यहेतवो व्यवस्थाः सर्वथा जनानामायतन्ते ।

न खलु स उपरतः, यस्य वल्लभः स्मरति ।

कल्याणावतंसा कल्याणसंपत् ।

सुलभानुकारः खलु जगति वेधसो निर्माणसंनिवेशः ।

अहो आश्चर्यं पुनरुक्तदारुणस्य परिणामरमणीयत्वं विधेः ।

अन्यथा वस्तु प्रवृत्तमन्यथा कृच्छ्रपर्यवसानं भवति ।

जयन्ति खलु महतां (अ)विसंवादिन्यः प्रत्यायिन्यः कल्याण्यो नीतयः ।

---

# महावीरचरितम् ।

प्रकृष्टकल्याणोदर्कसंगमा ह्येते भवन्ति भगवन्तः सत्यसन्धाः साक्षात्कृतब्रह्माणो महर्षयः

न केनचिदाश्रमाभ्यर्णभूमयोऽतिक्रमितव्याः ।

किं हि नामैतत्, यदम्बुनि मज्जन्त्यलाबूनि; ग्रावाणः प्लवन्ते ।

नोत्सवाः परावधीरणावैरस्यमर्हन्ति ।

नृशंसता हि पुरुषदोषः ।

यतः प्रज्ञानमभिसंभवति, तद्ध्याचरितव्यं ब्राह्मणेन; तरति येनापमृत्युं पाप्मानम् ।

प्राकृतानि तेजांस्यप्राकृते ज्योतिषि शाम्यन्ति ।

लघ्वपि व्यसनपदमभियुक्तस्य कृच्छ्रसाध्यं भवति ।

प्रायश्चित्त इव राजदण्डोऽप्येनसो निष्क्रयमामनन्ति धर्माचार्याः ।

स्वगृहात्स्वगृहं गन्तुमागन्तुं च कामचारः ।

गुरुभिरेव शिशवो धर्मलोपात्पालयितव्याः ।

विषयबाहुल्यं कालविप्रकर्षश्च स्मृतिं प्रमुष्णाति ।

न खलु लोकोत्तरकर्माणस्त्वादृशाः कृच्छ्रेषु मुह्यन्ति ।

अचिन्तनीयार्थास्तपसां विशेषाः ।

को हि पूज्यस्य गुरोर्वचनं न बहुमन्यते ।

महान्त एव हि तादृशानामगाधसत्त्वानामविनयपरिस्पन्दितं जानन्ति ।

वृद्धबुद्धिरनागतं पश्यति ।

अहो जातिसुलभं चापलमप्रतीकार्यम् ।

मानुषे लोके वात्सल्यं नाम केवलमखिलेन्द्रियवशीकरणचूर्णमुष्टिः ।

कथं प्रत्यक्षानुमानाभ्यामुपलभ्यमानमेकमेव वस्तु विप्रकृष्टान्तरं संपद्यते ।

दुष्टप्रशान्तिः कस्य न मनःप्रीत्यै भवति ।

लोकयात्रानुवर्तनीया ।

## नागानन्दम् ।

वन्द्याः खलु देवताः ।

कन्यका हि निर्दोषदर्शना भवन्ति ।

चिरात्खलु युक्तकारी विधिः स्यात्, यदि युगलमेतदन्योन्यानुरूपं घटयेत् ।

किं स्वजनः प्रियं वर्जयित्वान्यद्भणितुं जानाति ।

न शक्यते चित्तमन्यतः प्रवृत्तमन्यतः प्रवर्तयितुम्
रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः ।
विषधरवदनाद्विषमन्तरेण किमन्यन्निष्क्रामति ।
विचित्राणि विधिविलसितानि ।
अये कथमनभ्रा वृष्टिः ।

## रत्नावली ।

न कमलाकरं वर्जयित्वा राजहंस्यन्यस्मिन्नभिरमते ।
अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।
सर्वमप्यौदरिकस्याभ्यवहार एव पर्यवस्यति ।
अहो कोऽपि कामिजनस्य स्वगृहिणीसमागमपरिभाविनोऽभिनवजनं प्रति पक्षपातः ।
किं पुनरपरं साहसिकानां पुरुषाणां न संभाव्यते ।
•इयमनभ्रा वृष्टिः ।
दुरवगाहा गतिर्दैवस्य ।
अत्यन्तमाननीयेष्वपि निरनुरोधवृत्ति स्वामिभक्तिव्रतम् ।

## प्रियदर्शिका ।

गुणैकपक्षपातिनां रिपोरपि गुणाः प्रीतिं जनयन्ति ।

नास्ति खलु दुष्करं दैवस्य ।

निर्दोषदर्शना कन्यका खल्वियम् ।

न खल्वविघ्नमभिलषितमधन्यैः प्राप्यते ।

पुत्तलिकां भङ्क्त्वेदानीं रोदिषि ।

कमलिनीबद्धानुरागोऽपि मधुकरो मालतीं प्रेक्ष्याभिनवरसास्वाद-
लम्पटः कुतस्तामनासाद्य स्थितिं करोति ।

सर्वस्य वल्लभो जामाता भवति ।

अतिदुर्जनः खलु लोकः ।

## मृच्छकटिकम् ।

न पुष्पमोषमर्हत्युद्यानलता ।

गुणः खल्वनुरागस्य कारणं न बलात्कारः ।

सुष्ठु खल्विदमुच्यते रत्नं रत्नेन संगच्छत इति ।

स्वके गेहे कुक्कुरोऽपि तावच्चण्डो भवति ।

दौर्गत्यपीडितस्य मन्ये द्विगुणतरा पीडा भविष्यति

न युक्तं परकलत्रदर्शनम् ।

पुरुषेषु न्यासा निक्षिप्यन्ते न पुनर्गेहेषु ।

दरिद्रपुरुषसंक्रान्तमनाः खलु गणिका लोकेऽवचनीया भवति ।

किं हीनकुसुमं सहकारपादपं मधुकर्यः पुनः सेवन्ते ।

यस्यास्ति धनं स किं क्रोडे कृत्वा दर्शयति ।

दुर्लभा गुणा विभवाश्च ।

अपेयेषु तटाकेषु बहुतरमुदकं भवति ।

अनतिक्रमणीया भगवती गोकाम्या ब्राह्मणकाम्या च ।

नानापुरुषसङ्गेन वेश्याजनोऽलीकदक्षिणो भवति ।

सर्व्वोजनाचित्तानुवर्त्यबलाजनो भवति ।

साहसे श्रीः प्रतिवसति ।

स्त्रियो नाम चपलाः ।

न चन्द्रादातपो भवति ।

किं हीनकुसुमादपि सहकारपादपान्मकरन्दबिन्दवो निपतन्ति ।

अकर्दमसमुत्थिता पद्मिनी, अवञ्चको वणिक्, अचौरः सुवर्णकारः, अकलहो ग्रामसमागमः, अलुब्धा गणिकेति दुष्करमेते संभाव्यन्ते ।

गणिका नाम पादुकान्तरप्रविष्टेव लोष्टिका दुःखेन पुनर्निराक्रियते ।

गणिका, हस्ती, कायस्थः, भिक्षुः, चाटः, रासभश्चैते यत्र निवसन्ति; तत्र दुष्टा अपि न जायन्ते ।

न कालमपेक्षते स्नेहः ।

दुष्करं विषमौषधीकर्तुम् ।

अहो व्यवहारपराधीनतया दुष्करं खलु परचित्तग्रहणमधिकरणिकैः ।

सूर्योदय उपरागो महापुरुषनिपातमेव कथयति ।

अहो धिग्वैषम्यं लोकव्यवहारस्य ।

मूले च्छिन्ने कुतः पादपस्य पालनम् ।

पुरुषभाग्यानामचिन्त्याः खलु व्यापाराः ।

ईदृशो दासभावः, यत्सत्यं कमपि न प्रत्याययति ।

गगनतले प्रतिवसन्तौ चन्द्रसूर्यावपि विपत्तिं लभेते ।

लोके कोऽप्युत्थितः पतति, कोऽपि पतितोऽप्युत्तिष्ठते ।

सर्वत्रार्जवं शोभते ।

## मुद्राराक्षसम् ।

उपाध्यायसहभूः शिष्यजने दुःशीलता ।

यत्स्वयमभियोगदुःखैरसाधारणैरपाकृतम् , तदेव राज्यं सुखयति ।

श्रोत्रियाक्षराणि प्रयत्नलिखितान्यपि नियतमस्फुटानि भवन्ति ।

अनुचित उपचारो हृदयस्य परिभवादपि दुःखमुत्पादयति ।

अत्यादरः शङ्कनीयः ।

31

प्रीताभ्यः प्रकृतिभ्यः प्रतिप्रियमिच्छन्ति राजानः

शिरसि भयम्, अतिदूरे तत्प्रतीकारः ।

अमन्त्रौषधिकुशलो व्यालग्राही, मत्तमतंगजाधिरोही, लब्धाधिकारो जितकाशी राजसेवक इत्येते त्रयोऽप्यवश्यं विनाशमनुभवन्ति ।

प्रारब्धमपरित्याज्यमेव ।

न निष्परिग्रहं स्थानभ्रंशः पीडयिष्यति ।

नन्वयुक्ततरः सुहृद्द्रोहः ।

भव्यं रक्षति भवितव्यता ।

राज्यं हि नाम राजधर्मानुवृत्तिपरस्य नृपतेर्महदप्रीतिस्थानम् ।

दुराराधा हि राजलक्ष्मीरात्मविद्भिरपि राजभिः ।

दैवमविद्वांसः प्रमाणयन्ति ।

नोद्यमस्त्याज्यः ।

विजिगीषुमात्मगुणसंपन्नं प्रियहितद्वारेणाश्रयणीयमाश्रयेत् ।

गहनः सचिववृत्तान्तः ।

काले भेदबीजमुप्तमवश्यं फलमुपदर्शयति ।

मुण्डितमुण्डो नक्षत्राणि पृच्छसि ।

अधिकारपदं नाम निर्दोषस्यापि पुरुषस्य महदाशङ्कास्थानम् ।

ताड्यमानः पुरुषः किमिव न ब्रूयात् ।

अयमपरो गण्डस्योपरि स्फोटः ।

अलक्षितनिपाताः पुरुषाणां समविषमदशापरिणतयो भवन्ति।

स्वर्गं गतानां तावद्देवा दुःखितं जनमनुकम्पन्ते।

## वेणीसंहारम्।

वन्द्याः खलु गुरवः।

अप्रमत्तसंचरणीयानि रिपुबलानि।

स्वपन् जनः किं न खलु प्रलपति।

अकुशलदर्शना अपि स्वप्नाः प्रशंसया कुशलपरिणामा भवन्ति।

स इदानीं स्निग्धो जनः, यः पृष्टः परुषमपि हितं भणति।

अहो मुग्धत्वमबलानां नाम।

यावदयं संसारः, तावत्प्रसिद्धैवेयं लोकयात्रा; यत्पुत्रैः पितरो लोकद्वयेऽप्यनुवर्तनीयाः।

प्रकृतिर्दुस्त्यजा।

वक्तुं सुकरमिदं दुष्करमध्यवसितुम्।

न घटस्य कूपपतने रज्जुस्तत्र प्रक्षेप्तव्या।

उपक्रियमाणाभावे किमुपकरणेन।

यावत्प्राणिति, तावदुपदेष्टव्यभूमिर्विजिगीषुः प्रज्ञावताम्।

कालानुरूपं प्रतिविधातव्यम्।

अनुल्लङ्घनीयः सदाचारः।

अनुक्तहितकारिता हि प्रकाशयति मनोगतां स्वामिभक्तिम् ।
न युक्तं बन्धुव्यसनं विस्तरेणावेदयितुम् ।
न युक्तं वीरस्य क्षत्रियस्य प्रतिज्ञातं शिथिलयितुम् ।
न किंचिन्न ददाति भगवान्प्रसन्नः ।

## बालरामायणम् ।

सोऽयमातपार्थिनः पयोदाभ्युदयः ।
अनिर्वेदः सिद्धेर्मूलम् ।
अनुकूलं हि दैवं सर्वस्मै स्वस्ति करोति ।
क्वचित्कश्चित्प्रगल्भते, न हि सर्वः सर्वं जानाति
वस्त्वन्तरमतिशयानो हि प्रज्ञाप्रकर्षः ।
प्रभुचित्तानुवर्तनं हि सेवकजनासिद्धविद्या ।
अयमपरो गण्डस्योपरि पिटकोद्भेदः ।
अनमात्यायत्तसिद्धेर्धिङ्मन्त्रित्वम् ।
भवद्भविष्यदनर्थयोर्भवदनर्थं प्रतिकुर्वीत ।
तादृश एव तादृशानामपसर्पः स्यात् ।
साप्तपदीनं सख्यम् ।
सुप्तमत्तकुपितानां हि भावज्ञानं द्रष्टव्यम् ।
वटुस्वभावसुलभं चापलम् ।

तपस्यतामपि न निरत्ययः सुखप्रत्ययः ।

एकोऽपि गरीयान्दोषः समग्रमपि गुणग्रामं दूषयति ।

बहुष्वपि निजेषु कर्मसु विधेक्रे कर्त्रे किंचिदेव रोचते ।

न सर्वदा सर्वस्य सदृशो दशापाकः ।

अविमृश्यकारिता हि पुंसः परं परिभवस्थानम् ।

एष हुतवहं वर्षितुकामो मृगाङ्कमणिः ।

अये विकृतरूपतापि कचिन्महतेऽभ्युदयाय ।

सत्यं सत्यमिदं गीयते दुस्त्यजा प्रकृतिरिति ।

यो यत्रानुरक्तः, स तदन्यतिरस्कारेण तदेव बहुमन्यते ।

येन केनचिद्व्यसनिनो जनस्य तदसंनिधाने तत्प्रतिनिधिरपि विनोदाय ।

अनुलङ्घनीयो देवादेशः ।

कार्यं कार्यान्तरमन्तरयति ।

प्रकृतिमुखरा हि ब्राह्मणजातिः ।

न प्राणनिर्याणेऽप्यनुचितवाचो भवन्ति भृत्याः ।

अनाकलितसत्त्वसारसंभारभीषणरमणीयाकृतयो हि महात्मानः ।

न च विन्दानस्य योगमार्गमसुप्रतिपदः परब्रह्मानन्दः ।

अतिक्रान्ते वस्तुनि साक्षिप्रत्ययपरतन्त्रा व्यवहाराः ।

आत्मवधः प्रथमः पातकेषु ।

किं पुनरैरंमदे महसि न दारवीयं ज्योतिरस्तमयते ।

आधारनिबन्धनो यदाधेयस्य गुणाध्यारोपः । मुक्ताशुक्तिसंपुट-
पीतं हि पश्य पाथो ग्रन्थीभवति ।

सलिलगर्भगतोऽपि गभस्तिमाली दुरालोक एव ।

असतामपि महापुरुषशुश्रूषा किमपि कामदुघा ।

आयुधनिषेध्या रिपवो न सामसाध्याः ।

वाडवीयं ज्योतिरप्यर्णवार्णःपानार्थमभ्यर्थ्यते ।

आधेयविक्रमकर्माणो येन केनचिदपवदन्ते ।

किमभेद्यमम्भसाम्, किमदूष्यं दुर्जनवचसाम् ।

कस्य पुनः प्रत्यक्षपराङ्मुखस्य मतिमतः सतोऽनुमाने बहुमानः ।

एकस्मिन्नपराधिनि सर्वेऽपि सहधर्मचारिणोऽपराद्धारः ।

मुग्धबुद्धयो हि यथाश्रुतस्य ग्रहीतारः, न पुनर्विवेक्तारः ।

सोऽयं दिधक्षोर्दावपावकस्य गरिमसारः शीकरासारः ।

न विना हिमानीमचण्डो मार्तण्डः ।

निरङ्कुशाः कविवाचः ।

स हि चन्द्रमसोऽनुभावः, यदस्य ग्रावाणोऽपि निष्यन्दन्ते ।

अतथाविधो न तथाविधरहस्यवेदी ।

अभिमानिनामारम्भस्यानिर्वहणममन्दो दुर्यशःकन्दः ।

सेयं कवीनां वचनकामधेनुः, यदसद्भूतमपि सूते ।

प्रज्ञावतां हि चक्षुरक्षुद्रमतिविषयासु धिषणासु प्रतिवसति ।

अहो किमपि कन्दलितानुरागाः संसारभोगाः ।

मधुरस्य हि मानुषस्य प्रकृतिरेषा, यद्यथाकथमपि रमयति ।
गुणदोषयोर्युगपदापततोर्गरीयसि प्रयतितव्यम् ।
वह्निरेव वह्नेर्भेषजम् ।
तदसावस्यैवापराधः, यदुत्फुल्लफणं फणावन्तं न पश्यति ।
न शस्त्रग्रहणाधिकारः संबन्धमनुरुध्यते ।
न हि तरणिकिरणस्पर्शादन्यो व्याधिरिन्दीवरस्य ।
वृद्धबुद्धिर्हि प्रथमं पश्यति, चरमं कार्यदुर्योगोऽवतरति ।
काललाभो हि नयविदां प्रयोगग्रामं कन्दलयति ।
न कालहरणक्षमाः प्रियजनसमागममहोत्सवाः ।
केतकसंपर्कि सिचयमपि किमप्यामोदाय ।
ईर्ष्यायितं हि स्त्रीणां प्रकाशकं प्रेमभरस्य ।
पुरुषविशेषपरिशङ्कोत्कर्षिण्य एव पुरन्ध्र्यो भवन्ति ।
सकृद्विहितदोषं दोषेभ्यो विनिवर्तमानं साधुवद्वीक्षेत ।
कथमद्यापर्वणि चन्द्रग्रहणं वसुमतीवर्ति ।
प्रसादरसोन्मुखमनसोऽपि विलासहेतोः कामिन्यः कुप्यन्ति ।
किं हि दुष्करं स्वामिभक्तेः ।
किमसाध्यं वैदग्ध्यस्य ।
किमपि द्विषतामप्युदात्तजनचरितमावर्जकम् ।
क्व पुनः सुधादीधितिरातपस्यन्दी ।
अयमपरः क्षते क्षारावसेकः ।

कथं न नाम कुशलम्, येषां चरितानि जनानामाशिषो भवन्ति ।

अहह निष्करुणो विधिर्मालतीमुकुलैः कुकूलं कल्पयति ।

उचितकारित्वे श्रुतशिक्षितानि महाभागजनचारित्राणि ।

अप्रमत्तजनसंचरणीयानि गिरिकान्ताराणि ।

हा हतदैव, केलिकदलीकन्दली मत्तकरिशुण्डावेष्टनं साह्यते ।

क्व पुनर्मालतीकालिका दर्भगुणग्रथनाकदर्थनां क्षमते ।

अमन्त्रशीलो महीपतिः, अनपरग्रन्थदर्शी कविः, अपाठरुचिश्च
वन्दी न चिरं नन्दति ।

परपरितोषोपपाद्यफलं हि वैतालिकव्रतम् ।

सत्यं प्रत्यक्षीकृतसरस्वतीपरिमलो ब्राह्मो मुहूर्तो वर्तते ।

किं नामापराधित्वम्, यदि तत्क्षणमनुवर्तनम् ।

न हि राकामृगाङ्कमण्डलमन्तरेण चन्द्रमणेरानन्दजलस्यन्दः ।

प्रवृत्ते रणकर्मणि सेनयोः सारणापसरणानि गणशो भवन्ति,
कस्तत्र जयः पराजयो वा ।

कः शक्तिमानपि मृगाङ्कमूर्तिं शिलापट्टके पिनष्टि ।

को नाम धर्मविनयिनि जने न स्निह्यति ।

यो यत्र परमभिज्ञः, स तेन सुतरामावर्ज्यते ।

अवसरसंतोषणीयः स्वामिजनः ।

मृगाङ्कमण्डलेन समं जातस्य ततो न परिहीयन्ते गुणाः
पीयूषमण्डलस्य ।

अप्रतीकारे कर्मणि प्रहरणानि विडम्बनाय ।

तदिदं मृणालकाण्डेन गण्डशैलताडनम् ।

प्लुतिप्रधानैव वानरजातिः ।

स खल्वयस्कान्तमणेरनुभावः, यदयो द्रवति ।

मतिः परिणमन्ती पुरुषमुदात्तयति, न वयः ।

किमिदं नाम यदन्यः प्रतिपक्षोऽन्यस्मै कुप्यते ।

इह हि कामिनामनुरागपरिग्रहो गुणलवलाभलोभेन दोषप्रमोषमावहति ।

जलं जलसंपृक्तं महाजलाय कल्पते ।

बद्धो वाससि ग्रन्थिः ।

प्रतिकूलं हि दैवं स्वारब्धमपि कार्यं विपर्यासयति ।

मा कश्चन नियतप्रतिबन्धो मायाविधिः स्यात् ।

कियत्कालं जलदतिरस्करिणी मार्ताण्डमण्डलमन्तरयति ।

कियद्वा वर्णनमर्णवस्य, अयं मकरालय इति ।

परिपालना हि भृत्यान्स्वामिनः स्मारयति, न गुणग्रामः ।

सर्वो गुणेषु रज्यते न शरीरेषु ।

पतिव्रतामयं ज्योतिरनभिभवनीयं ज्योतिरन्तरैः ।

प्रकृष्टं हि तपः किमपि कामदुघम् ।

आर्षं हि वचनं विभिन्नवक्तृकमपि न विसंवदति ।

# विद्धसालभञ्जिका ।

प्रज्ञाप्रकर्षः सर्वेषामुपरि वसति ।

न खल्वपीडितः सहकारवृन्तग्रन्थिरपि रससर्वस्वं मुञ्चति ।

परिणामोत्पीडितमिव दाडिमफलं स्फुटनभूयिष्ठं मे वर्तते हृदयं कौतूहलेन ।

सुहृत्संचारितरहस्यं हि चेतः संविभक्तचिन्ताभरमिव लघूभवति ।

एषोऽपरो गण्डस्योपरि पिण्डकः संवृत्तः ।

कियच्चिरं वा चन्द्रे प्रसारितकरेऽविकासितोत्पला नीलोत्पलिनी तिष्ठति ।

एष त्वं स्वप्नलब्धैर्मोदकैर्ग्राममुपनिमन्त्रयसि ।

वरं तत्कालोपगता तित्तिरी, न तु दिवसान्तरिता मयूरी ।

को दुर्जनवचनानां कर्णं ददाति ।

यादृशश्चित्रकरस्तादृशी चित्रकर्मरूपरेखा ।

यादृशः कविस्तादृशी काव्यबन्धच्छाया ।

आकृतिमनुगृह्णन्ति गुणाः ।

न खलु व्यापारमन्तरेण कलितापि शुक्तिर्मुञ्चति मौक्तिकानि ।

तर्हि मालतीकुसुमैः कुकूलं कल्पयिष्यसि ।

न हि स्नेहो युक्तायुक्तमनुरुन्धे ।

कथमिव सहकारयष्ट्याः कलकण्ठी कुण्ठितप्रणया ।

मन्त्रस्य रक्षणं कार्यसिद्धेर्लक्षणम् !

कथमिव जीवतः कृकलासाच्छिरःस्वर्णं प्राप्यते ।

पण्डिता अलीकविकल्पैर्विस्मृतफला इव मर्कटा मूलमलभमानाः पल्लवग्राहिणो भवन्ति ।

न खलु मृगलाञ्छनमुज्झित्वा शशिकान्तपुत्तलिका बद्धनिर्झरा प्रवहति ।

प्रथमं सहकारमञ्जर्य उद्भिद्यन्ते, पश्चात्तच्चुम्बिनी कलकण्ठी कण्ठमुद्रां शिथिलीकरोति ।

का वर्णना, वकुलावली सुरभिगन्धोद्गारेति ।

न खलु सोपानपङ्क्तिमन्तरेण वलभ्याः समारोहः ।

हंस एव जलाद्दुग्धमुद्धरति ।

पुराणपत्रमपलपन्नवपल्लवः समुल्लसति ।

न च तरुणग्रन्थिपर्णाङ्कुरकबलनलुब्धो गन्धहरिणो दमनककेदारिकायामभिरमते

केतकीकुसुमवासितस्य खदिरसारस्याप्यन्यो गन्धोद्गारः ।

मूले वकुलयष्ट्याः सुरागण्डूषसेकः, कुसुमेषु मदिरागन्धोद्गारः

चन्द्रमणिर्हुतवहं निष्यन्दत इति को वा प्रतीकारः ।

विरलो वा परदुःखदुःखितो जनः ।

विदूरवसुधैव रत्नशलाकाभूः ।

किमुपेक्ष्यते केलिकदलीकन्दल्यां करिशुण्डादण्डावेष्टः

किमेषोऽनभ्रो वर्षः ।

न चित्रशिखण्डिधाम विना चकास्त्युदीची ।

न सुखसुप्तः प्रतिबोधयितव्यः

आत्मनः श्रीरन्यस्य हस्तगता कर्तव्या न भवति ।

महाकुलप्रसूतानां भर्तुः प्रियं प्रियम्, न त्वात्मनः प्रियं प्रियम् ।

नवकौतूहली कामिजनः ।

अनुगुणं हि दैवं सर्वस्मै स्वस्ति करोति ।

किं गते सलिले सेतुबन्धेन ।

किं गते विवाहे नक्षत्रपरीक्षया ।

लेखमुखा एव लेखवाहा भवन्ति ।

## अनर्घराघवम् ।

समानवृत्तेरपि क्वचिदेव कस्यचित्तारामैत्रकम् ।

उत्तरोत्तरेषां महोत्सवानां कदाचिदपि न तृप्यन्ति पुंसां हृदयानि ।

दृष्टं वा निःशेषानन्दनिष्यन्दिनीनामपीन्दुकरकन्दलीनां कमलवनीमीलनं कलङ्कस्थानम् ।

ममकारो हि राजपुत्रेषु राज्ञामुपलालनक्लेशाय केवलम्, उपयोग-
स्तु प्रजानाम् ।

दिवस्पृथिव्योस्तिमिरतिरस्करिणीं तरणिरणुतरोऽपि तेजसा तिर-
स्करोति ।

न खलु प्रकाशमन्तरेण तुहिनभानुरुज्जृम्भते ।

चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसुमचापचापलानि ।

मायाविनी खल्वियं राक्षसजातिः ।

प्राहुणिकहस्तेन सर्पमारणं खल्वेतत् ।

स्वयं प्रयोगादन्तेवासिभिर्विहितः प्रयोगो महिमानमाचार्याणा-
मुपचिनोति ।

क्वचित्सांक्रामिकोऽपि विशेषो नैसर्गिकमतिशेते ।

अहह नामधेयमात्रमाधुर्यादपरमार्थदृश्वानो विप्रलभ्यन्ते ।

शोकहर्षौ नाम लोकयात्रेयं भवतः ।

कथमयं ते माणिक्यपरिहाणेन गैरिकपरिग्रहः ।

पुरुषप्रकर्षाधाने हि विद्यावृद्धसंयोगाद्बहिरङ्गाणि वयांसि ।

न हि मिहिरमरीचिनिचयपचेलिमस्य तुहिनकरबिम्बसंवादादप-
रोऽपि कश्चिदगदंकारः कैरवाकरस्य ।

अहो सा तादृशी गुणानां प्रकृतिः, या विपक्षहस्तपतितापि
सुखयति ।

' आरण्योऽग्निरिव दुःसहदुःखामर्षजं तेजो विक्रमयति, मण्ड-

लस्य चानुग्राह्यो भवति ।'

'यो ह्युपनतस्य गुरुदारानतिमन्यते, तस्योद्विग्नं मण्डलमभावा-
योत्तिष्ठते ।'

लोकोत्तरं हि किमप्युन्मीलयन्तो जगति राज्योपभोगेभ्योऽपि
बीभत्सन्ते महानुभावाः ।

निर्वाणं हि सवितारं तरणिमणिरप्यनुनिर्वाति ।

अहो गरीयान्कालः, यदश्रुतचरमपि श्रावयति; अदृष्टचरमपि
दर्शयति ।

अप्रशस्तः खल्वारण्यकानां जनपदेषु चिरप्रचारः ।

आचारस्तु दूरादपि कृतः कृतः स्यात् ।

आतिपातिके हि कार्ये राज्ञां सद्यः शुद्धिः ।

महादोषः खल्वयमतिप्रसज्यमानो मानसः शोकाख्यो विकारः ।

बहुच्छलानि रक्षांसि ।

मन्त्रोत्साहसंपन्नानामपि प्रभुशक्तिमपेक्षन्ते सिद्धयः ।

आकारविशेषा एव गमयन्ति जातिविशेषान् ।

अहो दुर्निवारता भवितव्यतायाः ।

अलं वा दुर्विहितमतीतमुपालभ्य ।

यावद्द्रव्यभावी गुणो हि विजिगीषूणामुदात्तता ।

कालापेक्षी दण्डनीतिप्रयोगः ।

आत्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विजिगीषुः ।

अनर्थशङ्कीनि बन्धुजनहृदयानि भवन्ति ।

देशकालव्यवहितस्यापि प्रमेयग्रामस्य यथामुखीनमादर्शतलं हि स्थविरबुद्धिः ।

विजिगीषोरदीर्घसूत्रता हि कार्यसिद्धेरवश्यंभावः ।

सत्योऽयं 'अतिदुःखो निर्दुःखः' इति लोकप्रवादः ।

क्षुद्रैरपि संभूय भूयोभिरेको महान्सुकरः कदर्थयितुम् ।

यच्छीलः स्वामी, तच्छीलास्तस्य प्रकृतयः ।

प्रथमस्य हि प्रथमे पर्वणि शतकृत्वो विजयन्ते पराजीयन्ते च वीराः ।

प्रतिकृतानां विद्विषामपि व्यसनमतिमात्रं हृदयमर्माणि च्छिनत्ति ।

न किंचिदनीषत्करं नाम कृतान्तस्य

यत्सत्यमुत्सर्पिणी धर्मोत्तराणां सिद्धिः

दुरवगाहगम्भीरस्वभावानि महतां चरितानि ।

निजदैवदुर्विलासविचारालसो लोको लक्ष्मीदेव्या दुर्यशोवचनानि गायति ।

परिपूर्णा गुणिनो यस्मिन्कस्मिन्नपि शोभन्ते, क्षीणाः पुनः शीर्षमारोहन्तीति हरजटाचन्द्र एव प्रथमं निदर्शनम् ।




# चण्डकौशिकम् ।

भ्रष्टावसरस्य खेदकारणं गमनम् ।

निद्रा हि नाम प्राणिनां प्रथममिदं शरीरधारणनिमित्तम् ।

न विचारमर्हन्ति गुरुशासनानि ।

बहुवल्लभाः खलु राजानः ।

मृगया हि नाम भृशमुपकारिणी राज्ञाम् ।

अतिक्रान्तान्यर्हणीयसभाजनानि किल श्रेयसां परिपन्थीनि भवन्ति ।

अहो निर्ग्रन्थिरमणीयतया निरतिशयानि तपोवनवासिनां सुखानि ।

सर्वाभिभावि किमप्यनभिभवनीयं तेजसामुपरि तपोमयं ब्राह्मं तेजः ।

नूनमसमीक्ष्यकारिणा मयात्मेन्धनेनेव स्फुरच्छिखाकलापो ज्वलन एव पद्भ्यामाक्रान्तः ।

नादक्षिणं दानमामनन्ति ।

विचित्रः खल्वयं जीवलोकः ।

अनपराद्धं किल शैशवम् ।

प्रतिश्रुतमवश्यं देयम् ।

सुष्ठु खल्विदमुच्यते 'दुःखं दुःखैस्तिरोधीयते' इति
अहो निःसारता शरीराणाम् ।
न कस्यचिन्नाम न दुरतिक्रमा दैवपरिपाटी ।
अधनं दासभावं मन्यन्ते ।
बलवती भवितव्यता ।

---

## प्रबोधचन्द्रोदयम् ।

निसर्गसौम्यमेव ब्राह्मं ज्योतिः कुतोऽपि कारणात्प्राप्तविकार-
मपि पुनः स्वभाव एवावतिष्ठते ।
कुलक्षयप्रवृत्तानां पापकारिणां कुतः प्रत्यवायगणना ।
किमात्मनो दोषं लोको विजानाति ।
न खल्वन्धकारलेखया सहस्ररश्मेस्तिरस्कारः ।
सेर्ष्यं प्रायेण योषितां भवति हृदयम् ।
अहो निरङ्कुशा जडधियः ।
धूर्तप्रणीतागमप्रतारितानामाशामोदकैरियं तृप्तिर्मूर्खाणाम् ।
चिरेण खलु प्रमाणवन्ति वचनानि कर्णसुखमुपजनयन्ति ।
लघीयस्यपि रिपौ नानवहितेन जिगीषुणा भवितव्यम् ।
न खलु भावानुबद्धं प्रेम कालेनापि विलीयते ।
किमु प्रतिकूले विधातरि न संभाव्यते ।

चित्तमलं हि तत्, यदीर्ष्या नाम ।

स्वयं नष्टः परानपि नाशयितुमिच्छसि ।

अहिंसा परमो धर्मोऽस्ति ।

असुव्ययेनापि स्वामिनः प्रयोजनमनुष्ठेयम् ।

"प्रायश्च सुकृतिनां व्यवसितेऽर्थे देवा यान्ति सहायताम् ।"

अहो दुर्वारो दारुणः सोदरव्यसनजन्मा शोकानलः ।

नित्यानित्यवस्तुदर्शनो न पश्यति शोकावेगम् ।

दुरुच्छेदस्तु ममत्वग्रन्थिः ।

भावानामनित्यताभावनमेव तावन्ममतोच्छेदस्य प्रथमोऽभ्युपायः।

एतदेव कुलस्त्रीणां नैसर्गिकं शीलम्, यद्विपन्मग्नस्य स्वामिनः समयप्रतीक्षणमिति ।

## संकल्पसूर्योदयम् ।

कति कति न सन्त्यकूपारे शङ्खाः, किं ते परिष्कृतपुरुषोत्तमपाणिपद्मः पाञ्चजन्यः ।

नूनमतर्कितोपनता अप्यचिरद्युतिवदारम्भनियतावसाना मनीषिणामीर्ष्योदयः ।

अवधारितपरमार्थानामप्यवगतसंवादनार्थमुत्तरोत्तरं परिप्रश्नाः प्रवर्तन्ते ।

न हि जगति भवति मशको मातङ्गस्य प्रतिस्पर्धी ।

प्रसिद्धं खलु प्रज्ञाबलं मोक्षपर्यन्तानामतिदुष्कराणां सिद्धीनां साधनमिति ।

अविचारितरमणीयमबलाजनस्वाभाव्यम् ।

न हि तरक्षुर्मृगराजस्य परिपन्थी ।

समरदुर्दशानिवारणसाधनं संधिः ।

न खलु क्षुधितोऽपि शार्दूलः कदाचिदपि शाद्वलमत्ति ।

अनुद्घाटनीयमिदं राजरहस्यं विशेषतः स्त्रीषु ।

दुष्परिहरः खल्वनिर्द्धारितकालो नियतिविपर्यासः ।

मूढचेतसश्चैते मोघकर्माणो भविष्यन्ति ।

विरूपाः खलु जना निजमुखदोषं निर्मलेष्वपि दर्पणेषु समर्पयन्ति ।

किं दृष्टमपह्नोतव्यम्, आगमिकं वा न प्रत्येतव्यम् ।

अनादिः खल्वयमलङ्घनीयो रागजलधिः ।

अपि दृष्टः क्वचिदाप्तागमस्य बाधः ।

न खलु सहस्रमप्यालेख्यदिवसकरा अन्धकारं प्रतिक्षिपन्ति ।

प्रसिद्धं खलु वेदविप्रकेशवानामैकराश्यम् ।

अद्य पुनः पिशाचविवाहे गर्दभगानं संवृत्तम् ।

यत्सत्यम्, तदेव नित्यं भवति । यत्पुनर्मिथ्या, तत्कालेनालीकं भवति ।

समानचित्तवृत्तित्वं सखित्वम् ।

सम्यगुपसन्नस्य सच्छिष्यस्य समये सति किं न श्रावयितव्यम् ।

वर्णाश्रमजातिगोत्रप्रवरकुलचरणदेशकालादिविषयभेदेन व्यवस्थितैव हि विधिनिषेधमर्यादा ।

अतिस्नेहेन नूनमियमतिशङ्का ।

उपनिषदुपपन्नभूतानि खलु भगवतो भाषितानि ।

न खल्वखिलमपि निघृष्यते सुवर्णखण्डं वर्णनिष्कर्षाय ।

अहो नु खल्वन्धैरन्धस्य यष्टिः प्रदीयते ।

पिशाचानां पिशाचभाषयैवोत्तरं देयम् ।

भक्तजनवत्सले भगवति प्रसेदुषि किं नाम न प्रसीदति ।

अलङ्घनीया खलु राजाज्ञा ।

अद्य खलु शान्तिकर्मणि भेतालोदयः संवृत्तः ।

अन्धानां कथमभिलप्यते पयसो नैर्मल्यम् ।

न खलु बधिराणां कुतूहलमातनोति कोकिलालापः ।

जीवन्तो हि भद्राणि पश्यन्ति ।

न खलु सहस्रैरपि सलिलकुम्भैर्बलिभुजः प्रक्षाल्यमाना वलक्षतां प्रतिपद्यन्ते ।

निःसंशयः खलु पटुभिरपि विटपमारोहद्भिरप्राप्तानां पचेलिमानां फलानामयतमानस्यापि सुकृतपरिपाकेन पान्थजनस्य पुरतः परिपातः ।

स्वाभाव्यमेव शवमुष्टिवद्गृहीतग्राहिता महामोहस्य ।

स्थाने क्रोधो न खलु दोषाय ।

महति प्रतिपक्षे मैवं मन्दोत्साहेन भवितव्यम् ।

न खलु शलभाः सहस्रमपि सहस्रकिरणमभिभवन्ति ।

अनुसरति खलूत्साहमभिलषितसिद्धिः ।

अनुकूलो हि विधिः किं नाम नानुकूलयति ।

पाटच्चरलुण्ठितेषु भवनेषु जाग्रतोऽपि यामिकाः किमुपकरिष्यन्ति ।

सहायभूयस्त्वं सर्वेष्वपि कार्येष्वयत्नसिद्धिकरम् ।

सर्वत एव ह्यात्मानं गोपायेत् ।

सार्वलौकिकं गगनमलिनिमप्रत्यक्षं किं न प्रामाणिकैः परिभूयते ।

प्रव्रज्यापरिग्रहः परिवदनं चेति विप्रतिषिद्धम् ।

न खलु सहस्रमपि प्रतिसूर्याः कदाचिदपि सूर्यमभिभवन्ति ।

न खलु वृश्चिकभयात्पलायमानैराशीविषमुखे निपतितव्यम् ।

न खलु पाटच्चराः प्रकृतिं मुञ्चन्ति, न चाप्रमत्तमतयस्तैरुपहन्यन्ते ।

न खलु शाकुटस्य लवने शङ्कुलायाः कियानिव भारः ।

न चेषीकतूलमिन्धनयितुं वह्निना संरभ्यते ।

निरधिकारतैव नूनं सुखस्याधिकारः ।

संभवन्ति च सर्वत्र श्रेयसामन्तरायाः ।

नूनमप्रतिबुद्धतैव पुंस्त्वेषु प्रतिपक्षस्य हस्तावलम्बः ।

अवसरानुकूलवृत्तीनां खल्वधिकारिणामाधिपत्यं प्रतितिष्ठति ।

अहह सहस्रेष्वपि शिल्पकर्मसु किंचिदेव कदाचिदतिशेते ।
आजानसिद्धशक्तीनामभ्युच्चयो हि शिक्षाप्रकर्षः ।
प्रतिनियतैव हि वस्तुशक्तिः ।
निरङ्कुशाः खलु राजानः परिजनकृत्येषु ।
परिचितसजातीये ह्ययत्नलभ्यो भावबन्धः ।
अपारकारुण्यसंभवो ह्ययमशेषजनसंरक्षणाभिलाषिणः परमपुरुषस्यावतारगणः ।
किं किं न कारयति कार्यगौरवम् ।
शलभीनिपाते कदाचित्प्रदीपोऽपि विनाशमधिगच्छति ।
आत्मच्छायेव खलु नियतिरलङ्घनीया ।
न हि कदाचिदपि परिस्फुरन्ति प्रमदानां राजकार्यगतयः ।
अव्यवस्थिता हि युद्धसिद्धिः ।
अभङ्गुरा खलु दैवी नियतिः ।
अतिघोरचेष्टितः खल्वसावशेषविध्वंसनतर्षवानमर्षः ।
सर्वगुणातिशायिनी खल्वियं क्षान्तिः ।
अलङ्घनीयस्वभावः खल्वभिनिवेशः ।
अहो दुर्निरोधा खलु भगवती भवितव्यता ।
निरवधिकपौरुषाणामप्यनतिक्रमणीया नियतिः ।
दुष्परिहरः खल्वसौ दारुणो नियतिपरिणामः ।
अस्ति खलु सर्वधुरीणः कश्चित्सर्वजगदन्तर्यामी पुरुषः ।

## प्रसन्नराघवम् ।

मुग्धः खल्वबलाजनः ।

विषस्य विषमौषधं भविष्यति ।

संबन्धिजने परिहासवचनानि न खलु पापकारणानि ।

देवताधिष्ठितानि हि मुग्धवचनानि भवन्ति ।

राज्यरागोपरक्तचेतश्चन्द्रमसां कुतस्त्योऽयं सजहानन्दचान्द्रिकाच्छेदः ।

शोभन्त एव विनयमधुराणामधरीकृतात्ममहिमानः कामं सत्यविधुरा अपि वाचः ।

को जानाति विधेः संविधानवैदग्ध्यम् ।

न खल्वप्रोषितसलिलसेकः कलमकेदारः परिशुष्यति ।

कथं दावानलपरिशोषितायां तरुशाखायां कुठारमारोपयितुमिच्छसि ।

प्रकृतिभीरुः खल्वबलाजनः ।

सेयं प्रथमदर्शिततीव्रातपा पीयूषवृष्टिः ।

तत्कथमयमदृष्टचन्द्रलेखश्चन्द्रालोकः ।

चिन्तास्वप्नोऽपि नैवमचुम्बितावगाही भवति ।

अहो निजचित्तवृत्तिभित्तिभूमिकानुसारीणि वाक्चित्राणि लोकस्य ।

वक्रो हि विधिः ।

## मल्लिकामारुतः।

हन्त हस्तगतं माणिक्यमापणे मृग्यते।

उचितं तद्विदग्धिम्नः, यत्सदाचारे प्रवर्तनम्।

गगनलताकुसुममपि शेखरयितुमिच्छसि।

कमलाकरो मकरन्दं किरतीति किमाश्चर्यम्।

मित्रसंक्रामितः खलु सह्यो भवति संतापः।

शोचनीयः खलु सोऽनुरागः, यो न परस्परस्य।

ननु वञ्चनस्य वञ्चनैव प्रतिक्रिया।

अहो विस्मापकोऽस्य विरिञ्चस्य प्रपञ्चनिर्माणप्रकारः।

ननु रागान्धधियामविश्वसनीया उपपत्तयः।

तदिदं दर्वीकराद्भीतस्य वल्मीकवासोपदेशः।

अहो विधेरतिदुर्घटस्यापि घटने पटीयस्ता।

उद्भिन्नं खलु मन्त्रबीजं न फलाय कल्पते।

अहो मनोरथानामतिप्रसङ्गः।

दुःसहानि खलु सुहृद्विपत्तिव्यसनानि।

हन्त प्ररूढमात्र एव पारिजातपोतको दग्धोऽज्ञातपतनेन शुष्काशनिनिर्घातेन।

मातुलुङ्गबीजकामुकेन शाखामृगेण स्फुलिङ्गो लब्धः।

तिरयत्येव भीतिमङ्गनानां प्रियजनानुरागः।

अहो विशिष्टवस्त्वभिलाषो मञ्जूनाम् ।

स्वयमेव वर्द्धिता लता कथंनु फलसमये लूना ।

ननु श्रूयते 'धैर्येण विपदस्तीर्यन्ते' इति ।

स एष दिङ्मूढस्योन्मादावतारः ।

स्त्रियः खलु स्त्रीवृत्तान्तपरिज्ञाने सविशेषमाग्रहिण्यः ।

अनिर्वेदः परमो हेतुः श्रेयसः ।

हन्त विशिष्टगुणवत्त्वमपि क्वचिदनिष्टाय ।

श्रूयते खलु 'यद्यस्य प्रथमभावितं तत्तस्य कारणम्' इति ।

तदिदमङ्गारकबलितस्यामृतासारः ।

ननूच्यते 'अन्तःपुरगतमापणे घुष्यते' इति ।

अहो स्वच्छन्दहृद्यानि महतां चरितानि ।

एक एव हि समयो देवतागर्भाणां धारणप्रसवयोः ।

निसर्गशालीनः कुलकन्यकाजनः ।

को हि नाम दैवमतिवर्तेत ।

नह्यनन्तराया उत्सवाः ।

सेयं ज्वलतोऽग्नेर्घृतवृष्टिः ।

दुर्लङ्घं खलु विधातुर्वैशसम् ।

हन्त शोक इव हर्षोऽपि निमित्तमेव मूर्च्छायाः ।

॥ श्रीः ॥

# ॥ साहित्यरत्नमञ्जूषा ॥



## शाकुन्तलम् ।

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ १. २ ॥

अथवा भवितव्यानां द्वाराणि भवन्ति सर्वत्र ॥ १. १४ ॥
किमिव हि मधुराणां मण्डनं नाकृतीनाम् । ॥ १. १७ ॥
सतां हि सन्देहपदेषु वस्तुषु
प्रमाणमन्तःकरणप्रवृत्तयः ॥ १. १९ ॥
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥ १. २२ ॥
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥ २. १ ॥
अहो कामी स्वतां पश्यति ॥ २. २ ॥
मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले

मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः ॥ २.५

शमप्रधानेषु तपोधनेषु

गूढं हि दाहात्मकमस्ति तेजः ।

स्पर्शानुकूला इव सूर्यकान्ता-

स्तदन्यतेजोऽभिभवाद्वमन्ति ॥ २. ७ ॥

लभेत वा प्रार्थयिता न वा श्रियं

श्रिया दुरापः कथमीप्सितो भवेत् ॥ ३. ११ ॥

गान्धर्वेण विवाहेन बह्व्यो राजन्यकन्यकाः ।

श्रूयन्ते परिणीतास्ताः पितृभिश्चाभिनन्दिताः ॥ ३. २० ॥

यात्येकतोऽस्तशिखरं पतिरोषधीना-

माविष्कृतोऽरुणपुरःसर एकतोऽर्कः ।

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां

लोको नियम्यत इवात्मदशान्तरेषु ॥ ४-१ ॥

इष्टप्रवासजनितान्यबलाजनस्य

दुःखानि नूनमतिमात्रसुदुःसहानि ॥ ४. २ ॥

पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः ॥ ४. ५ ।

गुर्वपि विरहदुःखमाशाबन्धः साहयति ॥ ४. १५ ॥*

शुश्रूषस्व गुरून्कुरु प्रियसखीवृत्तिं सपत्नीजने

भर्तुर्विप्रकृतापि रोषकलुषा मास्म प्रतीपं गमः ।

भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥४. १७॥
अर्थो हि कन्या परकीय एव ॥ ४. २१ ॥
रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दा-
न्पर्युत्सुको भवति यत्सुखितोऽपि जन्तुः ।
तच्चेतसा स्मरति नूनमबोधपूर्वं
भावस्थिराणि जननान्तरसौहृदानि ॥ ५. २ ॥
औत्सुक्यमात्रमवसादयति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेवम् ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ५. ६ ॥
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम् ॥ ५. ७ ॥
भवन्ति नम्रास्तरवः फलोद्गमै-
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः
स्वभाव एवैष परोपकारिणाम् ॥ ५. १२ ॥
तमस्तपति घर्मांशौ कथमाविर्भविष्यति ॥ ५. १४ ॥
सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।

अतः समीपे परिणेतुरिष्यते

प्रियाप्रिया वा प्रमदा स्वबन्धुभिः ॥ ५. १७ ॥

स्त्रीणामशिक्षितपटुत्वममानुषीषु

संदृश्यते किमुत याः प्रतिबोधवत्यः ।

प्रागन्तरिक्षगमनात्स्वमपत्यजात-

मन्यैर्द्विजैः परभृताः खलु पोषयन्ति ॥ ५. २२ ॥

अतः परीक्ष्य कर्तव्यं विशेषात्संगतं रहः ।

अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम् ॥ ५. २४ ॥

उपपन्ना हि दारेषु प्रभुता सर्वतोमुखी ॥ ५. २६ ॥

वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः ॥ ५. २८ ॥

सहजं किल यद्विनिन्दितं

न खलु तत्कर्म विवर्जनीयम् ।

पशुमारणकर्मदारुणोऽ-

नुकम्पामृदुरेव श्रोत्रियः ॥ ६. १ ॥

मनोरथानामतटाः प्रवाहाः ॥ ६. १० ॥

स्रोतोवहां पथिनिकामजलामतीत्य

जातः सखे प्रणयवान्मृगतृष्णिकायाम् ॥ ६. १६ ॥

अहन्यहन्यात्मन एव ताव-

ज्ज्ञातुं प्रमादस्खलितं न शक्यम् ॥ ६. २६ ॥

हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः ॥ ६. २८ ॥

ज्वलति चलितेन्धनोऽग्नि-

विप्रकृतः पन्नगः फणं कुरुते ।

प्राय: स्वं महिमानं

क्षोभात्प्रतिपद्यते जन्तुः ॥ ६. ३१ ॥

सिध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः

संभावनागुणमवेहि तमीश्वराणाम् ।

किं वाभविष्यदरुणस्तमसां विभेत्ता

तं चेत्सहस्रकिरणो धुरि नाकरिष्यत् ॥ ७. ४ ॥

पूर्वावधीरितं श्रेयो दुःखं हि परिवर्तते ॥ ७. १३ ॥

आलक्ष्यदन्तमुकुलाननिमित्तहासा-

नव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।

अङ्काश्रयप्रणयिनस्तनयान्वहन्तो

धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ ७. १७ ॥

भवनेषु सुधासितेषु पूर्वं

क्षितिरक्षार्थमुशन्ति ये निवासम् ।

नियतैकपतिव्रतानि पश्चा-

त्तरुमूलानि गृहा भवन्ति तेषाम् ॥ ७. २० ॥

स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया ॥ ७. २४

उदेति पूर्वं कुसुमं ततः फलं

घनोदयः प्राक्तदनन्तरं पयः ।

निमित्तनैमित्तिकयोरयं क्रम-

स्तव प्रसादस्य पुरस्तु संपदः ॥ ७. ३० ॥

छाया न मूर्च्छति मलोपहतप्रसादे

शुद्धे तु दर्पणतले सुलभावकाशा ॥ ७. ३२ ॥

# विक्रमोर्वशीयम् ।

वसुधाधरकन्दराभिसर्पी

प्रतिशब्दोऽपि हरेर्भिनत्ति नागान् ॥ १. १५

प्रियवचनशतोऽपि योषितां

दयितजनानुनयो रसादृते ।

प्रविशति हृदयं न तां

मणिरिव कृत्रिमरागयोजितः ॥ २. २२ ॥

सर्वः कल्ये वयसि यतते भोक्तुमर्थान्कुटुम्बी

पश्चात्पुत्रैरपहृतभरः कल्पते विश्रमाय ॥ ३. १ ॥

यदेवोपनतं दुःखात्सुखं तद्रसवत्तरम् ।

निर्वाणाय तरुच्छाया तप्तस्य हि विशेषतः ॥ ३. २१ ॥

स्वार्थात्सतां गुरुतरा प्रणयिक्रियैव ॥ ४. १५ ॥

विभावितैकदेशेन स्तेयं यदभियुज्यते ॥ ४. १७ ॥

# मालविकाग्निमित्रम् ।

पुराणमित्येव न साधु सर्वं
 न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते
 मूढः परप्रत्ययनेयबुद्धिः ॥ १/२ ॥

पात्रविशेषन्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥ १. ६ ॥

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात् ।
नवसंरोहणशिथिलस्तरुरिव सुकरः समुद्धर्तुम् ॥ १. ८ ॥

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ १. ९ ॥

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥१. १३॥

श्लिष्टा क्रिया कस्यचिदात्मसंस्था
 संक्रान्तिरन्यस्य विशेषयुक्ता ।
यस्योभयं साधु स शिक्षकाणां
 धुरि प्रतिष्ठापयितव्य एव ॥ १. १६ ॥

लब्धास्पदोऽस्मीति विवादभीरो-
 स्तितिक्षमाणस्य परेण निन्दाम् ।

यस्यागमः केवलजीविकायै

तं ज्ञानपण्यं वणिजं वदन्ति ॥ १. १७ ॥

प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥ १. २० ॥

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः ।

पङ्कच्छिदः फलस्येव निकषेणाविलं पयः ॥ २. ७ ॥

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः ।

श्यामायते न युष्मासु यः काञ्चनमिवाग्निषु ॥ २. ९ ॥

स्थाने प्राणाः कामिनां दूत्यधीनाः ॥ ३. १४ ॥

अनातुरोत्कण्ठितयोः प्रसिध्यता

समागमेनापि रतिर्न मां प्रति ।

परस्परप्राप्तिनिराशयोर्वरं

शरीरनाशोऽपि समानुरागयोः ॥ ३. १५ ॥

छेदो दंशस्य दाहो वा क्षतेर्वा रक्तमोक्षणम् ।

एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः ॥ ४. ४ ॥

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।

कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलक्ष्यते ॥ ४. ६ ॥

कार्त्स्न्येन निर्वर्णयितुं च रूप-

मिच्छन्ति तत्पूर्वसमागतानाम् ।

न च प्रियेष्वायतलोचनानां

समग्रपातीनि विलोचनानि ॥ ४. ८ ॥

प्रतिपक्षेणापि पतिं
    सेवन्ते भर्तृवत्सलाः साध्व्यः ।
अन्यसरितां शतानि हि
    समुद्रगाः प्रापयन्त्यब्धिम् ॥ ५. १९. ॥

## उत्तररामचरितम् ।

सर्वथा व्यवहर्तव्यं कुतो ह्यवचनीयता ।
यथा स्त्रीणां तथा वाचां साधुत्वे दुर्जनो जनः ॥ १. ५ ॥
किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ १. ८ ॥
लौकिकानां हि साधूनामर्थं वागनुवर्तते ।
ऋषीणां पुनराद्यानां वाचमर्थोऽनुधावति ॥ १. १० ॥
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ १. १३ ॥
क्लिष्टो जनः कुलधनैरनुरञ्जनीयः ॥ १. १४ ॥
नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा
    मूर्ध्नि स्थितिर्न चरणैरवताडनानि ॥ १. १४ ॥
ते हि नो दिवसा गताः ॥ १. १९ ॥
अपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥ १. २८

अद्वैतं सुखदुःखयोरनुगतं सर्वास्ववस्थासु य-
    द्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो रसः ।
कालेनावरणात्ययात्परिणते यत्प्रेमसारे स्थितं
    भद्रं तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥ १. ३९ ॥
सतां केनापि कार्येण लोकस्याराधनं व्रतम् ॥ १. ४१ ॥
सतां सद्भिः सङ्गः कथमपि हि पुण्येन भवति ॥ २. १ ॥
प्रियप्राया वृत्तिर्विनयमसृणो वाचि नियमः
    प्रकृत्या कल्याणी मतिरनवगीतः परिचयः ।
पुरो वा पश्चाद्वा तदिदमविपर्यासितरसं
    रहस्यं साधूनामनुपधि विशुद्धं विजयते ॥ २. २ ॥
वितरति गुरुः प्राज्ञे विद्यां यथैव तथा जडे
    न खलु स तयोर्ज्ञाने शक्तिं करोत्यपहन्ति वा ।
भवति हि पुनर्भूयान्भेदः फलं प्रति तद्यथा
    प्रभवति शुचिर्बिम्बग्राहे मणिर्न मृदादयः ॥ २. ४ ॥
वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
    लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ २. ७ ॥
न किञ्चिदपि कुर्वाणः सौख्यैर्दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ २. १९ ॥
अन्त करणतत्त्वस्य दंपत्योः स्नेहसंश्रयात् ।
आनन्दग्रन्थिरेकोऽयमपत्यमिति कथ्यते ॥ ३. १७ ॥

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ॥ ३. २९ ॥

संतानवाहीन्यपि मानुषाणां
दुःखानि सद्बन्धुवियोगजानि ।
दृष्टे जने प्रेयसि दुःसहानि
स्रोतःसहस्रैरिव संप्लवन्ते ॥ ४. ८ ॥

गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः ॥ ४. ११ ॥

पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥ ४. १२ ॥

सुहृदिव प्रकटय्य सुखप्रदः
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणो
विधिरहो विशिनष्टि मनोरुजम् ॥ ४. १५ ॥

कन्यायाः किल पूजयन्ति पितरो जामातुराप्तं जनम् ॥ ४. १७ ॥

आविर्भूतज्योतिषां ब्राह्मणानां
ये व्याहारास्तेषु मा संशयो भूत् ।
भद्रा ह्येषां वाचि लक्ष्मीर्निषिक्ता
नैते वाचं विप्लुतां व्याहरन्ति ॥ ४. १८ ॥

अहेतुः पक्षपातो यस्तस्य नास्ति प्रतिक्रिया ।
स हि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ ५. १७ ॥

ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः ।

सा योनिः सर्ववैराणां सा हि लोकस्य निर्ऋतिः ॥ ५. २९ ॥

कामं दुग्धे विप्रकर्षत्यलक्ष्मीं

कीर्तिं सूते दुर्हृदो निष्प्रहन्ति ।

शुद्धां शान्तां मातरं मङ्गलानां

धेनुं धीराः सूनृतां वाचमाहुः ॥ ५. ३० ॥

सिद्धं ह्येतद्वाचि वीर्यं द्विजानां

बाह्वोर्वीर्यं यत्तु तत्क्षत्रियाणाम् ॥ ५. ३२ ॥

महार्घस्तीर्थानामिव हि महतां कोऽप्यतिशयः ॥ ६. ११ ॥

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-

र्न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।

विकसति हि पतङ्गस्योदये पुण्डरीकं

द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ ६. १२ ॥

न तेजस्तेजस्वी प्रसृतमपरेषां विषहते

स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः ।

मयूखैरश्रान्तं तपति यदि देवो दिनकरः

किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति ॥ ६. १४ ॥

प्रियानाशे कृत्स्नं जगदिदमरण्यं हि भवति ॥ ६. ३० ॥

को नाम पाकाभिमुखस्य जन्तो-

र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ ७. ४ ॥

# मालतीमाधवम् ।

ते श्रोत्रियास्तत्त्वविनिश्चयाय
  भूरि श्रुतं शाश्वतमाद्रियन्ते ।
इष्टाय पूर्ताय च कर्मणेऽर्था-
  न्दारानपत्याय तपोर्थमायुः ॥ १. ७ ॥

ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
  जानन्ति ते किमपि तान्प्रति नैष यत्नः ।
उत्पत्स्यतेऽस्ति मम कोऽपि समानधर्मा
  कालो ह्ययं निरवधिर्विपुला च पृथ्वी ॥ १. ८ ॥

यद्वेदाध्ययनं तथोपनिषदां सांख्यस्य योगस्य च
  ज्ञानं तत्कथनेन किं नहि ततः कश्चिद्गुणो नाटके ।
यत्प्रौढत्वमुदारता च वचसां यच्चार्थतो गौरवं
  तच्चेदस्ति ततस्तदेव गमकं पाण्डित्यवैदग्ध्ययोः ॥ १. १० ॥

बहिः सर्वाकारप्रगुणरमणीयं व्यवहर-
  न्पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमतिसंधाय कपटै-
  स्तटस्थः स्वानर्थान्घटयति च मौनं च भजते ॥ १. १७ ॥

प्रायः शुभं च विदधात्यशुभं च जन्तोः
  सर्वंकषा भगवती भवितव्यतैव ॥ १. २६ ॥

व्यतिषजति पदार्थानान्तरः कोऽपि हेतु-
न खलु बहिरुपाधीन्प्रीतयः संश्रयन्ते ।
विकसति हि पतङ्गस्योदये पुण्डरीकं
द्रवति च हिमरश्मावुद्गते चन्द्रकान्तः ॥ १. २७ ॥
रमणीयजन्मनि जने परिश्रम-
ललितो विधिर्विजयते हि मान्मथः ॥ २. ४ ॥
कुतोऽपत्यस्नेहः कुटिलनयनिष्णातमनसाम् ॥ २. ७ ॥
शास्त्रे प्रतिष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोधः प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥ ३. ११ ॥
सुहृदिव प्रकटय्य सुखप्रदां
प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्तनदारुणः
प्रविशिनष्टि विधिर्मनसो रुजम् ॥ ४. ७ ॥
किं वा कदाचिदपि केनचिदन्वभावि ।
सारङ्गसंहतिविधाविभकुम्भकूट-
कुट्टाकपाणिकुलिशस्य हरेः प्रमादः ॥ ५. ३२ ॥
शान्तिः कुतस्तस्य भुजङ्गशत्रो-
र्यस्मिन्निबद्धानुशया सदैव ।

जागर्ति दंशाय निशातदंष्ट्रा-

कोटिर्विषोद्गारगुरुर्भुजङ्गी ॥ ६. १ ॥

प्रेयो मित्रं बन्धुता वा समग्रा

सर्वे कामाः संपदो जीवितं च ।

स्त्रीणां भर्ता धर्मदाराश्च पुंसा-

मित्यन्योन्यं वत्सयोर्ज्ञातमस्तु ॥ ६. १८ ॥

हरेरतुलविक्रमप्रणयलालसः साहसे

स एव भवति क्वणत्कररुहप्रचण्डः सखा ।

स्फुरत्करटकोटरस्खलितदानसिक्तानन-

द्विपेश्वरशिरःस्थिरास्थिदलनैकवीरः करः ॥ ८. ७ ॥

प्रायेण बान्धवसुहृत्प्रियसंगमादि

सौदामनीस्फुरणचञ्चलमेव सौख्यम् ॥ ८. १४ ॥

कुमुदाकरेण शरदिन्दुचन्द्रिका

यदि रामणीयकगुणाय संगता ।

सुकृतं तदस्तु कतमस्त्वयं विधि-

र्यदकालमेघवितातिर्व्ययूयुजत् ॥ ९. ४९ ॥

नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा

मूर्ध्नि स्थितिर्न मुसलैर्बत कुट्टनानि ॥ ९. ५१ ॥

संगमः कर्मणां भेदाद्यदि न स्यान्न नाम सः ।

प्राणानां तु परित्यागे संतापोपशमः फलम् ॥ १०. ७ ॥

किमयमसिपत्रचन्दनरसच्छटासारयुगपदवपातः ।
अनलस्फुलिङ्गकलितः किमयमनभ्रः सुधावर्षः ॥ १०. १० ॥
संजीवनौषधिविषव्यतिकरमालोकतिमिरसंभेदम्
अद्य विधिरशनिशशधरमयूखसंवलनमनुकुरुते ॥ १०. ११ ॥
को नाम पाकाभिमुखस्य जन्तो-
र्द्वाराणि दैवस्य पिधातुमीष्टे ॥ १०. १३ ॥

---

# महावीरचरितम् ।

तमांसि ध्वंसन्ते परिणमति भूयानुपशमः
सकृत्संवादेऽपि प्रथत इह चामुत्र च शुभम् ।
अथ प्रत्यासङ्गः कमपि महिमानं वितरति
प्रसन्नानां वाचः फलमपरिमेयं प्रसुवते ॥ १. १२ ॥
दुग्धार्णवादृते जन्म चन्द्रकौस्तुभयोः कुतः ॥ १. २३ ॥
कन्यायाश्च परार्थतैव हि मता ....... ॥ १. ३० ॥
साधारण्यान्निरातङ्कः कन्यामन्योऽपि याचते ॥ १. ३१ ॥
....न वसन्त्येकत्र सर्वे गुणाः ॥ १. ३३ ॥
सर्वः प्रायो भजति विकृतिं भिद्यमाने प्रतापे ॥ २. ४ ॥
अमोघमस्त्रं क्षत्रस्य ब्राह्मणानामनुग्रहः ।
दुरासदं च तत्तेजः क्षत्रं यद्ब्रह्मसंयुतं ॥ २. ५ ॥

निःसन्देहविपर्यये सति पुनर्ज्ञाने विरुद्धक्रियं
राजा चेत्पुरुषं न शास्ति तदयं प्राप्तः प्रजाविप्लवः ॥२. ३५॥
असाध्यमन्यथा दोषं परिच्छिद्य शरीरिणः ।
यथा वैद्यस्तथा राजा शस्त्रपाणिर्भविष्यति ॥ ४. २३ ॥
तीर्थोदकं च वह्निश्च नान्यतः शुद्धिमर्हतः ॥ ४. २७ ॥
किं त्वनुष्ठाननित्यत्वं स्वातन्त्र्यमपकर्षति ।
संकटा ह्याहिताग्नीनां प्रत्यवायैर्गृहस्थता ॥ ४. ३३ ॥
अन्योन्यमाहात्म्यविदोरन्यैरविदितात्मनोः ।
विभ्राजते विरोधोऽपि नाम स्नेहे तु का कथा ॥ ४. ३४ ॥
शक्तिर्हि कालस्य विभोर्जराख्या
शक्त्यन्तराणां प्रतिबन्धहेतुः ॥ ५. ४ ॥
........ निपुणमनुपाल्या हि शिशवः ॥ ५. १४ ॥
........ननु मित्रस्य यो गुरुर्गुरुरेव सः ॥ ५. ४३ ॥
सर्वंकषः कषति हा विषमः कृतान्तः ॥ ५. ५६ ॥
प्राणैरपि हिता वृत्तिरद्रोहो व्याजवर्जनम् ।
आत्मनीव प्रियाधानमेतन्मैत्रीमहाव्रतम् ॥ ५. ५९ ॥
पतिव्रतामयं ज्योतिः शान्तं दीप्तं च घुष्यते ॥ ६. ६ ॥
न कम्पन्ते झंझामरुति किल वाति प्रतिदिशं
समुन्मूर्च्छत्सारोः कुलशिखरिणः किंचिदपि ते ।
न मर्यादां तेऽपि प्रतिजहति गाम्भीर्यगरिम-

स्फुरद्ब्रह्माणोऽकलितमहिमानोऽम्बुनिधयः ॥ ६. ३६ ॥
दिव्यौषध्या जयति महिमा कोऽप्यचिन्त्यानुभावः ॥ ६. ५३॥
पतिव्रतामयं ज्योतिर्ज्योतिषान्येन शोध्यते ।
इदमाश्चर्यमथवा लोकस्थित्यनुवर्तनम् ॥ ७. ४ ॥

## नागानन्दम् ।

न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम् ॥ १. ९ ॥
अन्योन्यप्रीतिकृतां समानरूपानुरागकुलवयसाम् ।
केषांचिदेव मन्ये समागमो भवति पुण्यवताम् ॥ २. १४ ॥
स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया ।
राज्यस्य कृते स कथं प्राणिवधक्रौर्यमातनुते ॥ २. १७ ॥
सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः ।
शरीरकस्यापि कृते मूढाः पापानि कुर्वते ॥ ४. ७ ॥
क्रोडीकरोति प्रथमं यदा जातमनित्यता ।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः ॥ ४. ८ ॥
यैरत्यन्तदयापरैर्न विहिता वन्ध्यार्थिनां प्रार्थना
यैः कारुण्यपरिग्रहान्न गणितः स्वार्थः परार्थे प्रति ।
ये नित्यं परदुःखदुःखितधियस्ते साधवोऽस्तं गता
मातः संहर बाष्पवेगमधुना कस्याग्रतो रुद्यते ॥ ४. १० ।

आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः ॥५. २०।
मेदोऽस्थिमांसमज्जासृक्संघातेऽस्मिंस्त्वचावृते ।
शरीरे खलु का शोभा सदा बीभत्सदर्शने ॥ ५. २३ ॥

## रत्नावली ।

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥१. ७॥
तपति प्रावृषि नितरामभ्यर्णजलागमो दिवसः ॥ ३. १० ॥
प्रकृष्टस्य प्रेम्णः स्खलितमविषह्यं हि भवति ॥ ३. १५ ॥

## प्रियदर्शिका ।

तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापि दोषेण ।
प्रविशन्ति शङ्कमाना राजकुलं प्रायशो भृत्याः ॥ १. ८ ॥
प्रायो यत्किंचिदपि प्राप्नोत्युत्कर्षमाश्रयान्महतः ।
मत्तेभकुम्भतटगतमेति हि शृङ्गारतां भस्म ॥ ३. १ ॥
वामे विधौ न हि फलन्त्यभिवाञ्छितानि ॥ ४. ८ ॥

# मृच्छकटिकः ।

शून्यमपुत्रस्य गृहं चिरशून्यं नास्ति यस्य सन्मित्रम् ।
मूर्खस्य दिशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ १. ८ ॥

सुखं हि दुःखान्यनुभूय शोभते
घनान्धकारेष्विव दीपदर्शनम् ।
सुखात्तु यो याति नरो दरिद्रतां
धृतः शरीरेण मृतः स जीवति ॥ १. १० ॥

दारिद्र्यान्मरणाद्वा मरणं मम रोचते न दारिद्र्यम् ।
अल्पक्लेशं मरणं दारिद्र्यमनन्तकं दुःखम् ॥ १. ११ ॥

सत्यं न मे विभवनाशकृतास्ति चिन्ता
भाग्यक्रमेण हि धनानि भवन्ति यान्ति ।
एतत्तु मां दहति नष्टधनाश्रयस्य
यत्सौहृदादपि जनाः शिथिलीभवन्ति ॥ १. १३ ॥

दारिद्र्याद्ध्रियमेति ह्रीपरिगतः प्रभ्रश्यते तेजसो
निस्तेजाः परिभूयते परिभवान्निर्वेदमापद्यते ।
निर्विण्णः शुचमेति शोकपिहितो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो विधनता सर्वापदामास्पदम् ॥ १. १४ ॥

तपसा मनसा वाग्भिः पूजिता बलिकर्मभिः ।
तुष्यन्ति शमिनां नित्यं देवताः किं विचारितैः ॥ १. १६ ॥

दारिद्र्यात्पुरुषस्य बान्धवजनो वाक्ये न संतिष्ठते
  सुस्निग्धा विमुखीभवन्ति सुहृदः स्फारीभवन्त्यापदः ।
सत्त्वं ह्रासमुपैति शीलशशिनः कान्तिः परिम्लायते
  पापं कर्म च यत्परैरपि कृतं तत्तस्य संभाव्यते ॥१. ३६॥

सङ्गं नैव हि कश्चिदस्य कुरुते संभाषते नादरा-
  त्संप्राप्तो गृहमुत्सवेषु धनिनां सावज्ञमालोक्यते ।
दूरादेव महाजनस्य विहरत्यल्पच्छदो लज्जया
  मन्ये निर्धनता प्रकाममपरं षष्ठं महापातकम् ॥ १. ३७॥

सुजनः खलु भृत्यानुकम्पकः
  स्वामी निर्धनकोऽपि शोभते ।
पिशुनः पुनर्द्रव्यगर्वितो
  दुष्करः खलु परिणामदारुणः ॥ ३. १ ॥*

शङ्कनीया हि लोकेऽस्मिन्निष्प्रतापा दरिद्रता ॥ ३. २४ ॥

आत्मभाग्यक्षतद्रव्यः स्त्रीद्रव्येणानुकम्पितः ।
अर्थतः पुरुषो नारी या नारी सार्थतः पुमान् ॥ ३. २७ ॥

स्वैर्दोषैर्भवति हि शङ्कितो मनुष्यः ॥ ४. २ ॥

नो मुष्णाम्यबलां विभूषणवतीं फुल्लामिवाहं लतां
  विप्रस्वं न हरामि काञ्चनमथो यज्ञार्थमभ्युद्धृतम् ।
धात्र्युत्सङ्गगतं हरामि न तथा बालं धनार्थी क्वचि-
  त्कार्याकार्यविचारिणी मम मतिश्चौर्येऽपि नित्यं स्थिता ४. ६

अपण्डितास्ते पुरुषा मता मे
ये स्त्रीषु च श्रीषु च विश्वसन्ति ॥ ४. १२ ॥

स्त्रीषु न रागः कार्यो रक्तं पुरुषं स्त्रियः परिभवन्ति ॥ ४. १३ ॥

एता हसन्ति च रुदन्ति च वित्तहेतो-
र्विश्वासयन्ति पुरुषं न तु विश्वसन्ति ।
तस्मान्नरेण कुलशीलसमन्वितेन
वेश्याः श्मशानसुमना इव वर्जनीयाः ॥ ४. १४ ॥

समुद्रवीचीव चलस्वभावाः
संध्याभ्रलेखेव मुहूर्तरागाः ।
स्त्रियो हृतार्थाः पुरुषं निरर्थं
निष्पीडितालक्तकवत्त्यजन्ति ॥ ४. १५ ॥

न पर्वताग्रे नलिनी प्ररोहति
न गर्दभा वाजिधुरां वहन्ति ।
यवाः प्रकीर्णा न भवन्ति शालयो
न वेशजाताः शुचयस्तथाङ्गनाः ॥ ४. १७ ॥

छायार्थं ग्रीष्मसंतप्तो यामेवाहं समाश्रितः ।
अजानता मया सैव पत्रैः शाखा वियोजिता ॥ ४. १८ ॥

स्त्रियो हि नाम खल्वेता निसर्गादेव पण्डिताः ।
पुरुषाणां तु पाण्डित्यं शास्त्रैरेवोपदिश्यते ॥ ४. १९ ॥

गुणेषु यत्नः पुरुषेण कार्यो
न किंचिदप्राप्यतमं गुणानाम् ।
गुणप्रकर्षादुडुपेन शंभो-
रलङ्घ्यमुल्लङ्घितमुत्तमाङ्गम् ॥ ४. २३ ॥
गुणप्रवालं विनयप्रशाखं
विस्रम्भमूलं महनीयपुष्पम् ।
तं साधुवृक्षं स्वगुणैः फलाढ्यं
सुहृद्विहङ्गाः सुखमाश्रयन्ति ॥ ४. ३२ ॥
वेगं करोति तुरगस्त्वरितं प्रयातुं
प्राणव्ययान्न चरणास्तु तथा वहन्ति ।
सर्वत्र यान्ति पुरुषस्य चलाः स्वभावाः
खिन्नास्ततो हृदयमेव पुनर्विशन्ति ॥ ५. ८ ॥
उन्नमति नमति वर्षति गर्जति मेघः करोति तिमिरौघम्
प्रथमश्रीरिव पुरुषः करोति रूपाण्यनेकानि ॥ ५. २६
धनैर्वियुक्तस्य नरस्य लोके
किं जीवितेनादित एव तावत् ।
यस्य प्रतीकारनिरर्थकत्वा-
त्कोपप्रसादा विफलीभवन्ति ॥ ५. ४० ॥
पक्षविकलश्च पक्षी शुष्कश्च तरुः सरश्च जलहीनम् ।
सर्पश्चोद्धृतदंष्ट्रस्तुल्यं लोके दरिद्रश्च ॥ ५. ४१ ॥

...: खलु समाः पुरुषा दरिद्राः
 कूपैश्च तोयरहितैस्तरुभिश्च शीर्णैः ।
यद्दृष्टपूर्वजनसंगमविस्मृतानां-
 मेवं भवन्ति विफलाः परितोषकालाः ॥ ५. ४२ ॥
त्यजति किल तं जयश्रीर्जहति च मित्राणि बन्धुवर्गाश्च ।
भवति च सदोपहास्यो यः खलु शरणागतं त्यजति ॥६.१८॥
विपर्यस्तमनश्चेष्टैः शिलाशकलवर्ष्मभिः ।
मांसवृक्षैरियं मूर्खैर्भाराक्रान्ता वसुंधरा ॥ ८. ६ ॥
स्त्रीभिर्विमानितानां कापुरुषाणां विवर्धते मदनः ।
सत्पुरुषस्य स एव तु भवति मृदुर्नैव वा भवति ॥ ८. ९ ॥
विविक्तविस्रम्भरसो हि कामः ॥ ८. ३० ॥
सुचरितचरितं विशुद्धदेहं
 न हि कमलं मधुपाः परित्यजन्ति ॥ ८. ३२ ॥
यत्नेन सेवितव्यः पुरुषः कुलशीलवान्दरिद्रोऽपि ।
शोभा हि पणस्त्रीणां सदृशजनसमाश्रयः कामः ॥ ८. ३३ ॥
छन्नं कार्यमुपक्षिपन्ति पुरुषा न्यायेन दूरीकृतं
 स्वान्दोषान्कथयन्ति नाधिकरणे रागाभिभूताः स्वयम् ।
तैः पक्षापरपक्षवर्धितबलैर्दोषैर्नृपः स्पृश्यते
 संक्षेपादपवाद एव सुलभो द्रष्टुर्गुणो दूरतः ॥ ९. ३ ॥
किं कुलेनोपदिष्टेन शीलमेवात्र कारणम् ।

भवन्ति नितरां स्फीताः सुक्षेत्रे कण्टकिद्रुमाः ॥ ९. ७ ॥

नह्याकृतिः सुसदृशं विजहाति वृत्तम् ॥ ९. १६ ॥

यथैव पुष्पं प्रथमे विकाशे समेत्य पातुं मधुपाः पतन्ति ।
एवं मनुष्यस्य विपत्तिकाले छिद्रेष्वनर्था बहुलीभवन्ति ॥९.२६॥

परोऽपि बन्धुः समसंस्थितस्य
मित्रं न कश्चिद्विषमस्थितस्य ॥ १०. १६ ॥

अम्भोजिनी लोचनमुद्रणं किं
भानावनस्तं गमिते करोति ॥ १०. ५७ ॥

कांश्चित्तुच्छयति प्रपूरयति वा कांश्चिन्नयत्युन्नतिं
कांश्चित्पातविधौ करोति च पुनः कांश्चिन्नयत्याकुलान् ।
अन्योन्यं प्रतिपक्षसंहतिमिमां लोकस्थितिं बोधय-
न्नेष क्रीडति कूपयन्त्रघटिकान्यायप्रसक्तो विधिः ॥१०.५९॥

## मुद्राराक्षसम् ।

जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
को हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥ १. ८ ।

ऐश्वर्यादनपेतमीश्वरमयं लोकोऽर्थतः सेवते
तं गच्छन्त्यनु ये विपत्तिषु पुनस्ते तत्प्रतिष्ठाशया

भर्तुर्ये प्रलयेऽपि पूर्वसुकृतासङ्गेन निःसङ्गया
भक्त्या कार्यधुरां वहन्ति बहवस्ते दुर्लभास्त्वादृशाः ॥ १.१४॥
अप्राज्ञेन च कातरेण च गुणः स्याद्भक्तियुक्तेन कः
प्रज्ञाविक्रमशालिनोऽपि हि भवेत्किं भक्तिहीनात्फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्या नृपतेः कलत्रपितरे संपत्सु चापत्सु च ॥ १.१५ ॥
स्वयमाहृत्य भुञ्जाना बलिनोऽपि स्वभावतः ।
नरेन्द्राश्च गजेन्द्राश्च प्रायः सीदन्ति दुःखिताः ॥ १. १६ ॥
हिमवति दिव्यौषधयः शीर्षे सर्पः समाविष्टः ॥ १. २१ ॥*
सेवेयं मम चित्रकर्मरचना भित्तिं विना वर्तते ॥ २. ४ ॥
प्रकृत्या वा काशप्रभवकुसुमप्रान्तचपला
पुरन्ध्रीणां प्रज्ञा पुरुषगुणविज्ञानविमुखी ॥ २. ७ ॥
प्रारभ्यते न खलु विघ्नभयेन नीचैः
प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारब्धमुत्तमगुणा न परित्यजन्ति ॥ २. १७ ॥
किं शेषस्य भरव्यथा न वपुषि क्ष्मां न क्षिपत्येव य-
त्किं वा नास्ति परिश्रमो दिनपतेरास्ते न यन्निश्चलः ।
किं त्वङ्गीकृतमुत्सृजन्कृपणवच्छ्लाघ्यो जनो लज्जते
निर्व्यूढिः प्रतिपन्नवस्तुषु सतामेतद्धि गोत्रव्रतम् ॥२. १८॥

रूपादीन्विषयान्निरूप्य करणैर्यैरात्मलाभस्त्वया
    लब्धंस्तेष्वपि चक्षुरादिषु हताः स्वार्थावबोधक्रियाः ।
अङ्गानि प्रसभं त्यजन्ति पटुतामाज्ञाविधेयानि ते
    न्यस्तं मूर्ध्नि पदं तवैव जरया तृष्णे मुधा ताम्यसि॥३.१॥
परायत्तः प्रीतेः कथमिव रसं वेत्ति पुरुषः ॥ ३. ४ ॥
तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न संतिष्ठते
    मूर्खं द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि ।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनहो
    श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ ३.५ ॥
इह विरचयन्साध्वीं शिष्यः क्रियां न निवार्यते
    त्यजति तु यदा मार्गं मोहात्तदा गुरुरङ्कुशः ।
विनयरुचयस्तस्मात्सन्तः सदैव निरङ्कुशाः ॥ ३. ६ ॥
भेतव्यं नृपतेस्ततः सचिवतो राज्ञस्ततो वल्लभा-
    दन्येभ्यश्च वसन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः
    सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥३.१४॥
स्तुवन्ति श्रान्तास्याः क्षितिपतिमभूतैरपि गुणैः
    प्रवाचः कार्पण्याद्यदवितथवाचोऽपि पुरुषाः ।
प्रभावस्तृष्णायाः स खलु सकलः स्यादितरथा
    निरीहाणामीशस्तृणमिव तिरस्कारविषयः ॥ ३. १६ ॥

ये सत्यमेव हि गुरूनतिपातयन्ति

तेषां कथं नु हृदयं न भिनत्ति लज्जा ।। ३. ३३ ।।

सत्वभङ्गभयाद्राज्ञां कथयन्त्यन्यथा पुरः ।

अन्यथा विवृतार्थेषु स्वैरालापेषु मन्त्रिणः ।। ४. ८ ।।

सद्यः क्रीडारसच्छेदं प्राकृतोऽपि न मर्षयेत् ।। ४. १० ।।

अत्युच्छ्रिते मन्त्रिणि पार्थिवे च

विष्टभ्य पादावुपतिष्ठते श्रीः ।

सा स्त्रीस्वभावादसहा भरस्य

तयोर्द्वयोरेकतरं जहाति ।। ४. १३ ।।

प्रायो भृत्यास्त्यजन्ति प्रचलितविभवं स्वामिनं सेवमानाः ४.२१

मुहुर्लक्ष्योद्भेदा मुहुरधिगमाभावगहना

मुहुः संपूर्णाङ्गी मुहुरतिकृशा कार्यवशतः ।

मुहुर्नश्यद्बीजा मुहुरपि बहुप्रापितफले-

त्यहो चित्राकारा नियतिरिव नीतिर्नयविदः ।। ५. ३ ।।

कुले लज्जायां च स्वयशसि च माने च विमुखः

शरीरं विक्रीय क्षणिकमपि लाभाद्धनवत ।

तदाज्ञां कुर्वाणो हितमहितमित्येतदधुना

विचारातिक्रान्तः किमिति परतन्त्रो विमृशति ।। ५. ४ ।।

मित्राणि शत्रुत्वमुपानयन्ती

मित्रत्वमर्थस्य वशाच्च शत्रून् ।

नीतिर्नयत्यस्मृतपूर्ववृत्तं
  जन्मान्तरं जीवत एव पुंसः ॥ ५. ८ ॥

भयं तावत्सेव्यादभिनिविशते सेवकजनं
  ततः प्रत्यासन्नाद्भवति हृदये चैव निहितम् ।
ततोऽध्यारूढानां पदमसुजनद्वेषजननं
  गतिः सोच्छ्रायाणां पतनमनुकूलं कलयति ॥ ५. १२ ॥

दैवेनोपहतस्य बुद्धिरथवा सर्वा विपर्यस्यति ॥ ६. ८ ॥

पितॄन्पुत्राः पुत्रान्परवदभिहिंसन्ति पितरो
  यदर्थं सौहार्दं सुहृदि च विमुञ्चन्ति सुहृदः ।
प्रियं मोक्तुं तद्यो व्यसनमिव सद्यो व्यवसितः
  कृतार्थोऽयं सोऽर्थस्तव सति वणिक्त्वेऽपि वणिजः ॥६. १६॥

भवति पुरुषस्य व्याधिर्मरणं वा सेवितेऽपथ्ये ।
राजापथ्ये पुनः सेविते सकलमपि कुलं म्रियते ॥ ७. २ ॥ *

मुक्त्वामिषाणि मरणभयेन तृणैर्जीवन्तम् ।
व्याधानां मुग्धहरिणं हन्तुं को नाम निर्बन्धः ॥ ७. ३ ॥ *

केनोत्तुङ्गशिखाकलापकपिलो बद्धः पटान्ते शिखी
  पाशैः केन सदागतेरगतिता सद्यः समापादिता ।
केनानेकपदानवासितसटः सिंहोऽर्पितः पञ्जरे
  भीमः केन च नैकनक्रमकरो दोर्भ्यां प्रतीर्णोऽर्णवः ॥७. ६॥

द्रव्यं जिगीषुमधिगम्य जडात्मनोऽपि
नेतुर्यशस्विनि पदे नियतं प्रतिष्ठा ।
अद्रव्यमेत्य भुवि शुद्धनयोऽपि मन्त्री
शीर्णाश्रयः पतति कूलजवृक्षवृत्त्या ॥ ७. १४ ॥

कार्याणां गतयो विधेरपि नयन्त्याज्ञाकरत्वं चिरात् ॥ ७. १६॥

---

## वेणीसंहारम् ।

स्त्रीणां हि साहचर्याद्भवन्ति चेतांसि भर्तृसदृशानि ॥ १. २०॥

आत्मारामा विहितरतयो निर्विकल्पे समाधौ
ज्ञानोद्रेकाद्विघटिततमोग्रन्थयः सत्त्वनिष्ठाः ।
यं वीक्षन्ते कमपि तमसां ज्योतिषां वा परस्ता-
त्तं मोहान्धः कथमयममुं वेत्तु देवं पुराणम् ॥ १. २३ ॥

गुप्त्या साक्षान्महानल्पः स्वयमन्येन वा कृतः ।
करोति महतीं प्रीतिमपकारोऽपकारिषु ॥ २. ३ ॥

ग्रहाणां चरितं स्वप्नोऽनिमित्तौत्पातिकं तथा ।
फलन्ति काकतालीयं तेभ्यः प्राज्ञा न बिभ्यति ॥ २. १५ ॥

दैवायत्तं कुले जन्म ॥ ३. ३७ ॥

उपेक्षितानां मन्दानां धीरसत्त्वैरवज्ञया ।
अत्रासितानां क्रोधान्धैर्भवत्येषा विकत्थना ॥ ३. ४३ ॥

हीयमानाः किल रिपोर्नृपाः संदधते परान् ॥ ५. ६ ॥

शाखारोहस्थगितवसुधामण्डले मण्डिताशें
पीनस्कन्धे सुसदृशमहामूलपर्यन्तबन्धे ।
दग्धे दैवात्सुमहति तरौ तस्य सूक्ष्माङ्कुरेऽस्मि-
न्नाशाबन्धं कमपि कुरुते छाययार्थी जनोऽयम् ॥६. २६॥

## बालरामायणम् ।

प्रसत्तेर्यः पात्रं तिलकयति यं सूक्तिरचना
य आद्यः स्वादूनां श्रुतिचुलकलेह्येन मधुना ।
यदात्मानो विद्याः परिणमति यश्चार्थवपुषा
स गुम्भो वाणीनां कविवृषनिषेव्यो विजयते ॥ १. १ ॥

नारीपरिभवं सोढुं दाक्षिणात्या न शिक्षिताः ॥ १. ३ ॥

कलत्रहरणे पुंसां कियदर्णवलङ्घनम् ॥ १. ४ ॥

रसनासु च सुकवीनां निवसति सारस्वतं चक्षुः ॥ १. ७ ॥

उदन्वच्छन्ना भूः स च निधिरपां योजनशतं
सदा पान्थः पूषा गगनपरिमाणं गणयति ।
इति प्रायो भावाः स्फुरदवधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥ १. ८ ॥

दुराराधा लक्ष्मीरनवहितचित्तं चलयति ॥ १. २४ ॥

स्वेच्छया कुरुते स्वामी यत्किंचन यतस्ततः ।
तत्तत्प्रतिचिकीर्षन्तो दुःखं जीवन्ति मन्त्रिणः ॥ १. २५ ॥
....क्नु पुनः सर्वत्र सर्वे गुणाः ॥ १. ३६ ॥
सकलस्यास्य लोकस्य जातिर्भवति मातृतः ।
ऋषीणां तु श्रुतिदृशां पितृतो धर्मनिर्णयः ॥ २. ३३ ॥
लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं नहि निमित्तमुदात्ततायाः ।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुद्रसमुद्रपानम् ॥ २. ५१ ॥
गतः स कालो यत्रासीन्मुक्तानां जन्म वल्लिषु ।
वर्तन्ते सांप्रतं तासां हेतवः शुक्तिसंपुटाः ॥ ३. २
स्थितिः पुण्येऽरण्ये सह परिचयो हन्त हरिणैः
फलैर्मेध्या वृत्तिः प्रतिनदि च तल्पानि दृषदः ।
इतीयं सामग्री फलति हि विरक्त्यै स्पृहयतां
वनं वा गेहं वा सदृशमुपशान्तस्य मनसः ॥ ३. १७
स्त्रैणः पुंसां नवपरिगमः काममुन्मादहेतुः ॥ ३. २६ ॥
यस्य वज्रमणेर्भेदे भिद्यन्त लोहसूचयः ।
करोतु तत्र किं नाम नारीनखविलेखनम् ॥ ३. ६६ ॥
ननु भवति विनीतं द्रव्यमेव क्रियाभिः ॥ ४ १५ ॥
तत्राधारनिबन्धनो यदि भवत्याधेयधर्मोदयः ॥ ४. २३ ॥

शतभङ्गीभवद्भद्रा महतां हि प्रसत्तयः ॥ ४. २८ ॥

सहस्रं हि पितुर्माता गौरवेणातिरिच्यते ॥ ४. ३० ॥

गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।

उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ ४. ३१ ॥

अभ्युत्थानमुपागते गृहपतौ तद्भाषणे नम्रता

तत्पादार्पितदृष्टिरासनविधिस्तस्योपचर्या स्वयम् ।

सुप्ते तत्र शयीत तत्प्रथमतो जह्याच्च शय्यामिति

प्राच्यैः पुत्रि निवेदिताः कुलवधूसिद्धान्तधर्मा अमी ॥४.४३॥

निर्व्याजा दयिते ननान्दृषु नता श्वश्रूषु भक्ता भव

स्निग्धा बन्धुषु वत्सला परिजने स्मेरा सपत्नीष्वपि ।

पत्युर्मित्रजने सनर्मवचना खिन्ना च तद्वेषिषु

स्त्रीणां संवननं नतभ्रु तदिदं वीतौषधं भर्तृषु ॥४. ४४ ॥

डिम्भस्य दुर्विलसितानि मुदे गुरूणाम् ॥ ४. ६० ॥

वामे बाहावुत तदितरे कार्यतः को विशेषः ॥ ४. ६९ ॥

किं वीरस्य विकत्थना ........॥ ४. ७८ ॥

स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ॥ ५. २ ॥

सुखिनः परसौख्येन परदुःखेन दुःखिताः ।

जायन्ते कवयः काव्ये नयतन्त्रे च मन्त्रिणः ॥ ५. ३ ॥

प्रेम रम्यमुभयोः समं दिशोः

कामिनां यदिह चाषपिच्छवत् ।

एकतन्तु न चकास्ति साध्वपि
 श्यामपृष्ठ इव बर्हिणश्छदः ॥ ५. १४ ॥
समप्रेमरसं समरूपयौवनं समविलासविशिष्टम् ।
समसुखदुःखं च जनं समपुण्यैर्जनो लभते ॥ ५. १६ ॥*
विरहमविरहं वा नानुरुन्धन्ति मेघाः
सुखिनमसुखिनं वा सर्वमुत्कण्ठयन्ति ॥ ५. २९ ॥
स्वामी भृत्यापराधेन दण्डनीय इति स्थितिः ॥ ५. ७० ॥
नीतितन्त्रे द्वयं दृष्टं सिद्धये कृत्यवस्तुनः ।
समानः कार्ययोगश्च प्रभुशक्तिश्च निश्चला ॥ ६. १ ॥
शशिकान्तः कथं ग्रावा भजते वह्निरलताम् ॥ ६. ३३ ॥
वहन्ति शोकशङ्कुं च कुर्वन्ति च यथोचितम् ।
कोऽप्येष महतां हन्त गाम्भीर्यानुगुणो गुणः ॥ ७. १६ ॥
वहति भुवनश्रेणीं शेषः फणाफलकस्थितां
 कमठपतिना मध्यपृष्ठं सदा स च धार्यते ।
तमपि कुरुते क्रोडाधीनं पयोधिरनादरा-
 दहह महतां निःसीमानश्चरित्रविभूतयः ॥ ७. ४० ॥
दायादान्न च रिक्तवत्कचन भोः शौर्यक्रियाक्रामति ॥ ८.२८ ॥
.......................................सूर्यभक्तो
भास्वन्मणिर्ज्वलति किं स्फटिकोपलस्य ॥ ८. २९ ॥

ध्वान्तबन्दीकृतापीन्दोर्न कला जातु नीलति ॥ १०. ३ ॥
आलिङ्गिते भ्रातृगात्रे कवोष्णः सोऽपि चन्द्रमाः ॥१०. १००॥

## विद्धसालभञ्जिका ।

श्रियः प्रदुग्धे विपदो रुणद्धि
यशांसि सूते मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीते
शुद्धा हि बुद्धिः किल कामधेनुः ॥ १. ८ ॥
मृणालीतन्तुभ्यः सिचयरचना कुत्र भवतु ॥ १. २० ॥
किं चन्द्रिकां क्वचिदशीतरुचिः प्रसूते ॥ २. ४ ॥
न विना चन्द्रं शेफालिकाया विकसन्ति कुसुमानि ॥२.१९॥*
न मालतीदाम विमर्दयोग्यं
न प्रेम नव्यं सहतेऽन्तरायम् ।
म्लानापि मोच्या न हि केसरस्रक् ॥ ३. ५ ॥

## अनर्घराघवम् ।

यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ १. ४ ॥

नामोदयति कमिन्दुः कुमुदं पुनरस्य सर्वस्वम् ॥ १. १६ ॥
हुतमिष्टं च तप्तं च धर्मश्चायं कुलस्य ते ।
गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥ १. १७ ॥
कष्टा वैधव्यथा कष्टो नित्यमुद्वहनक्रमः ।
श्रवणानामलंकारः कपोलस्य तु कुण्डलम् ॥ १. ४० ॥
ध्यानमयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु ।
विषयेषु नैष्ठिकानां सर्वपथीना मतिः क्रमते ॥ १. ४६ ॥
विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ १. ५८ ॥
स्थानेषु शिष्यनिवहैर्विनियुज्यमाना
  विद्या गुरुं हि गुणवत्तरमातनोति ।
आदाय शुक्तिषु वलाहकविप्रकीर्णै
  रत्नाकरो भवति वारिभिरम्बुराशिः ॥ २. ९. ॥
वारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-
  रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचस्तारवीः ।
तत्पश्यन्ति च धाम नाभिपतता यच्चार्मणे चक्षुषी
  धन्यानां विरजस्तमा भगवती चर्येयमाह्लादते ॥ २. २९. ॥
वाचमेषामृषीणां हि शास्त्रमेवानुवर्तते ॥ २. ५८ ॥
............क्नुं विपरियन्ति द्विजगिरः ॥ ३. १९. ॥
अविनयभुवामज्ञानानां शमाय भवन्नपि
  प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये ।

फणिभयभृतामस्तूच्छेदक्षमस्तमसामसौ
विषधरफणारत्नालोको भयं तु भृशायते । ॥ ४. १२ ॥
पतति व्यसने दैवाद्दारुणाद्दारुणात्मनि ।
संवर्मयति वज्रेण धैर्येण महतां मनः ॥ ५. १५ ॥
सन्तो मनसि कृत्यैव प्रवृत्ताः कृत्यवर्त्मनि ।
कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ ५. ३५ ॥
अभेदेनोपान्ते कुमुदमुदरे वा स्थितवतो
विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।
अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचय-
प्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ ६. ६ ॥
गुणवद्भिः सह संगममुच्चैः पदमाप्तुमुत्सुका लक्ष्मीः ।
वीरकरवालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ ७. ४४ ॥
पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घता ॥ ७. ८४

## चण्डकौशिकम् ।

दृष्टं किमपि लोकेऽस्मिन्न निर्दोषं न निर्गुणम् ।
आवृणुध्वमतो दोषान्विवृणुध्वं गुणान्बुधाः ॥ १. ५
चित्तं प्रसादयति लाघवमादधाति
प्रत्यङ्गमुज्ज्वलयति प्रतिभाविशेषम् ।

दोषानुदस्यति करोति च धातुसाम्य-
मानन्दमर्पयति योगविशेषगम्यम् (निद्रा)। ॥ १. ८ ॥
शान्तेः स्वस्त्ययनाद्दानाद्विप्राणां स्वस्तिवाचनात् ।
दुःस्वप्नोत्पातशमनं सतां चैवानुकीर्तनात् ॥ १. २४ ॥
खिन्नं विनोदयति मानसमातनोति
स्थैर्यं चले वपुषि लाघवमादधाति ।
उत्साहबुद्धिजननीं रणकर्मयोग्यां
राज्ञां मुधैव मृगयां व्यसनं वदन्ति ॥ १. २५ ॥
मनः संभोगेभ्यः स्पृहयति न संकल्पविरतं
वियोगेषु स्नेहान्विदधति न वा निर्ममतया ।
अहंकारत्यागान्निजपरविभागव्युपरमे
परां शान्तिं प्राप्ताः किमपि सुखिनः संयमधनाः ॥२. १५॥
पदे पदे साध्वसमावहन्ति
प्रशान्तरम्याणि तपोवनानि ।
सर्वाणि तेजांसि मृदूभवन्ति
स्वयोनिमासाद्य यथाग्निरम्भः ॥ २. १६ ॥
गुणवद्भ्यो द्विजातिभ्यो देयं रक्ष्या भयार्दिताः ।
अरातिभिश्च योद्धव्यमिति मे निश्चिता मतिः ॥ २. २७ ॥
यत्सत्यं दुर्विलङ्घ्या भवति परिणतिः कर्मणां प्राकृतानाम् ॥३.२॥
किंकर्तव्यविचारमूढमनसः सर्वत्र शून्या दिशः ॥ ३. ५ ॥

लोकद्वयप्रतिभयैकनिदानमेत-
    द्धिक्प्राणिनामृणमहो परिणामघोरम् ।
एकः स एव हि पुमान्परमस्त्रिलोके
    क्रुद्धस्य येन धनिकस्य मुखं न दृष्टम् ॥ ३. १६ ॥
शासनास्खलनं भर्तुर्भृत्यस्य परमो गुणः ॥ ३. १८ ॥
धारासिक्ततृणाग्रबिन्दुतरलाः कामं निरस्ताः श्रियः ॥ ३.१९॥
नरं वामारम्भः कमिव न विधाता प्रहरति ॥ ३. २२ ॥
तदिदं चूडारत्नं चरणाभरणत्वमुपनीतम् ॥ ३. २४ ॥
परिशान्तं व्यसनेष्वहो न दैवम् ॥ ४. १ ॥
भैक्षाद्वैतं तपोद्वैतं क्रियाद्वैतं च तत्परम् ।
सुलभं सर्वमेवैतदात्माद्वैतं तु दुर्लभम् ॥ ४. २६ ॥
सुखं वा दुःखं वा किमिव हि जगत्यस्ति नियतं
    विवेकप्रध्वंसाद्भवति सुखदुःखव्यतिकरः ।
मनोवृत्तिः पुंसां जगति जयिनी कापि महतां
    यया दुःखं दुःखं सुखमपि सुखं वा न भवति ॥४. २८॥
परेषामुपकाराय न कथंचिन्न साधवः ।
कुहूमपि समासाद्य धिनोतीन्दुर्वनस्पतीन् ॥ ४. २९ ॥
चलन्ति गिरयः कामं युगान्तपवनाहताः ।
कृच्छ्रेऽपि न चलत्येव धीराणां निश्चलं मनः ॥ ४. ३४ ॥
यत्सत्यं कृतकृत्यसुस्थमनसां तुल्या विपत्संपदा ॥ ५. ५ ॥

अन्धंतमःक्रकचभैरवपूयवीची-

चण्डासिपत्रवनरौरवशाल्मलीषु ।

नैतेषु सन्ति नरकेष्वपि यातनास्ता

दुःखेन यास्तनयविक्लबजेन तुल्याः ॥ ५. १४ ॥

मरणान्निर्वृतिं यान्ति धन्याः स्वाधीनवृत्तयः ।

आत्मविक्रयिणः पापाः प्राणत्यागेऽप्यनीश्वराः ॥ ५. १५॥

मध्ये व्यक्तमनादिविभ्रमवशादव्यक्तमाद्यन्तयोः

पञ्चत्वं प्रकृतिः किलास्य जगतस्तत्पञ्चधा संभृतम् ।

संसारार्णववीचिभङ्गवलनैर्योगा वियोगैः समा-

स्तन्मोहादपरं न वेद्मि विदुषां शोकस्य यत्कारणम् ५.१७

स्वकर्मवैचित्र्यविपाकविभ्रमै-

र्विरूढमार्गाः परलोकभूमयः ॥ ५. १८ ॥

---

## प्रबोधचन्द्रोदयः ।

प्रभवति मनसि विवेको विदुषामपि शास्त्रसंभवस्तावत् ।

निपतन्ति दृष्टिविशिखा यावन्नेन्दीवराक्षीणाम् ॥ १. ११ ॥

सन्तु विलोकनभाषणविलासपरिहासकेलिपरिरम्भाः ।

स्मरणमपि कामिनीनामलमिह मनसो विकाराय ॥ १. १६ ॥

एकामिषप्रभवमेव सहोदराणा-

मुज्जृम्भते जगति वैरमिति प्रसिद्धम् ।

पृथ्वीनिमित्तमभवत्कुरुपाण्डवानां
  तीव्रस्तथा हि भुवनक्षयकृद्विरोधः ॥ १. १८ ॥
सहजमलिनवक्रभावभाजां
  भवति भवः प्रभवात्मनाशहेतुः ।
जलधरपदवीमवाप्य धूमो
  ज्वलनविनाशमनुप्रयाति नाशम् ॥ १. २१ ॥
गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ।
उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ १. २२ ॥
सततधृतिरप्युच्चैः शान्तोऽप्यवाप्तमहोदयोऽ-
  प्यधिगतनयोऽप्यन्तः स्वस्थोऽप्युदीरितधीरपि ।
त्यजति सहजं धैर्यं स्त्रीभिः प्रतारितमानसः
  स्वमपि यदयं मायासङ्गात्पुमानिह विस्मृतः ॥ १. २५ ॥
संमोहयन्ति रमयन्ति विषादयन्ति
  निर्भर्त्सयन्ति मदयन्ति विडम्बयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
  किं नाम वामनयना न समाचरन्ति ॥ १. २७ ॥
वेश्यावेश्मसु शीधुगन्धिललनावक्त्रासवामोदितै-
  र्नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचन्द्राः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरप्राप्ताग्निहोत्रा इति
  ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ २. १ ॥

प्रभुप्रसादो हि तनोति पौरुषम् ॥ २. २५ ॥

विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुंतुदः ।
उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ २. २७ ॥

कान्तेत्युत्पललोचनेति विपुलश्रोणीभरेत्युन्नम-
त्पीनोत्तुङ्गपयोधरेति सुमुखाम्भोजेति सुभ्रूरिति ।
दृष्ट्वा माद्यति मोदतेऽभिरमते प्रस्तौति विद्वानपि
प्रत्यक्षाशुचिपुत्तिकां स्त्रियमहो मोहस्य दुश्चेष्टितम् ॥४. ८॥

फलं स्वेच्छालभ्यं प्रतिवनमखेदं क्षितिरुहां
पयः स्थाने स्थाने शिशिरमधुरं पुण्यसरिताम् ।
मृदुस्पर्शा शय्या सुललितलतापल्लवमयी
सहन्ते संतापं तदपि धनिनां द्वारि कृपणाः ॥ ४. १९ ॥

निर्दहति कुलमशेषं ज्ञातीनां वैरसंभवः क्रोधः ।
वनमिव घनपवनाहततरुवरसंघट्टसंभवो दहनः ॥ ५. १ ॥

ध्रुवं ध्वंसो भावी जलनिधिमहीशैलसरिता-
मतो मृत्योः शीर्यत्तृणलघुषु का जन्तुषु कथा ।
तथाप्युच्चैर्बन्धुव्यसनजनितः कोऽपि विषमो
विवेकप्रोन्माथी दहति हृदयं शोकदहनः ॥ ५. २ ॥

...... ..सुहृदामनिष्टाशाङ्कि मानसम् ॥ ५. ४ ॥

समानान्वयजातानां परस्परविरोधिनाम् ।
परैः प्रत्यभिभूतानां प्रसूते संगतिः श्रियम् ॥ ५. ८ ॥

अत्यादरपरो विद्वानीहमानः स्थिरां श्रियम् ।
अग्नेः शेषमृणाच्छेषं शत्रोः शेषं न शेषयेत् ॥ ५. ११ ॥

विसर्पति विषाग्निवद्दहति शर्ममर्माणि मे
तनोति भृशवेदनाः कषति सर्वकाषं वपुः ।
विलुम्पति विवेकितां हृदि च मोहमुन्मीलय-
त्यहो ग्रसति जीवितं प्रसभमेव शोकज्वरः ॥ ५. १२ ॥

भूत्वा कल्पशतायुषोऽम्बुजभुवः सेन्द्राश्च देवासुरा
मन्वाद्या मुनयो महीजलधरा नष्टाः परःकोटयः ।
मोहः कोऽयमहो महानुदयते लोकस्य शोकावहो
बन्धोः फेनसमे गते वपुषि यत्पञ्चात्मके पञ्चताम् ॥५.१४॥

उप्यन्ते विषवल्लिबीजविषमाः क्लेशाः प्रियाख्या नरै-
स्तेभ्यः स्नेहमया भवन्ति न चिराद्वज्राग्निगर्भाङ्कुराः ।
येभ्योऽमी शतशः कुकूलहुतभुग्दाहं दहन्तः शनै-
र्देहं दीप्तशिखासहस्रशिखरा रोहन्ति शोकद्रुमाः ॥५.१६॥

लालितानां स्वजातानां हृदि संचरतां चिरम् ।
प्राणानामिव विच्छेदो मर्मच्छेदादरुंतुदः ॥ ५. १९ ॥

मार्जारभाक्षिते दुःखं यादृशं गृहकुक्कुटे ।
न तादृङ्ममताशून्ये कलविङ्केऽथ मूषके ॥ ५. २० ॥

प्रादुर्भवन्ति वपुषः कति वा न कीटा
यान्यत्नतः खलु तनोरपसारयन्ति ।

मोहः क एष जगतो यदपत्यसंज्ञां
 तेषां विधाय परिशोषयति स्वदेहम् ॥ ५. २१ ॥
अकाण्डपातजातानामार्द्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधिः ॥ ५. २५ ॥
वशं प्राप्ते मृत्योः पितरि तनये वा सुहृदि वा
 शुचालं तप्यन्ते भृशमुदरताडं जडधियः ।
असारे संसारे विरसपरिणामे तु विदुषां
 वियोगो वैराग्यं द्रढयति वितन्वञ्छमसुखम् ॥ ५. २८ ॥
श्रियो दोलालोला विषयजरसाः प्रान्तविरसा
 विपद्गेहं देहं महदपि धनं भूरिनिधनम् ।
बृहच्छोको लोकः सततमबलानर्थबहुला
 तथाप्यस्मिन्घोरे पथि बत रता नात्मनि रताः ॥ ५. ३० ॥
पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्रश्यतां
 मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव ।
संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां सदा
 सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ॥ ५. ३१ ॥
नार्यस्ता नवयौवना मधुकरव्याहारिणस्ते द्रुमाः
 प्रोन्मीलन्नवमल्लिकासुरभयो मन्दास्त एवानिलाः ।
अद्योदात्तविवेकमार्जिततमःस्तोमस्य लोकं पुन-
 स्तानेतान्मृगतृष्णिकार्णवजलप्रायान्मनः पश्यति ॥ ५. ३२ ।

# संकल्पसूर्योदयम् ।

ये लोकानिह वञ्चयन्ति विरलोदञ्चन्महःकञ्चुका-
स्ते तिष्ठन्तु महद्गृहेषु मणयः किं तैरिदं चिन्त्यताम् ।
श्रीवत्सप्रतिवेशदीपरुचिना सार्द्धं किमाभाष्यते
पद्मोल्लासनदर्पणेन मणिना प्रत्नेषु रत्नेष्वपि ॥ १. १० ॥

मनुव्यासप्राचेतसपरिषदर्हा क्वचिदियं
सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः के विन्ध्याचलविकटसंध्यानटजटा-
परिभ्रान्ता पङ्क्तोरुपरि यदि गङ्गा निपतति ॥ १. १६ ॥

गम्भीरभीषणगतिर्गिरिखण्डनादौ
चूडापदं पशुपतेरपि घूर्णयन्ती ।
स्वादुप्रसन्नसुभगानि वसुंधरायां
स्रोतांसि दर्शयति किं न सुरस्रवन्ती ॥ १. १७ ॥

असभ्यपरिपाटिकामधिकरोति शृङ्गारिता
परस्परतिरस्कृतिं परिचिनोति वीरायितम् ।
विरुद्धगतिरद्भुतस्तदलमल्पसारैः परैः
शमस्तु परिशिष्यते शमितचित्तखेदो रसः ॥ १. १९ ॥

भूयसीरपि कलाः कलङ्किताः
प्राप्य कश्चिदपचीयते शनैः

एकयापि कलया विशुद्धया

योऽपि कोऽपि भजते गिरीशताम् ॥ १. २६ ॥'

तिष्ठतु गुणावमर्शः स्त्रीणामालोकनादिभिः सार्द्धम् ।
दोषानुचिन्तनार्थो स्मृतिरपि दूरीकरोति वैराग्यम् ॥ १. ४० ॥

सतः सत्त्वविहीनानां सत्तयैवापराध्यतः ।
कथंकारं प्रतीकारः कल्पकोटिशतैरपि ॥ १. ५० ॥

पश्यति परेषु दोषानसतोऽपि जनः सतोऽपि नैव गुणान् ।
विपरीतमिदं स्वस्मिन्महिमा मोहाञ्जनस्यैषः ॥ १. ६४ ॥

सर्वतः करवीरादीन्सूते सागरमेखला ।
मृतसंजीविनी यत्र मृग्यमाणदशां गता ॥ २. ६ ॥

मुक्ताशुक्तिविशुद्धसिद्धतटिनीचूडालचूडापदः

किं कुल्यां कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम् ॥२. २७॥

विकटमुरभिद्वक्षःपीठीपरिष्करणोचितः

कुलगिरितुलारोहे भावी कियानिव कौस्तुभः ॥ २. २८ ॥

रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं

लवणवणिजः कर्पूरार्घं किमित्यभिमन्वते ॥ २. २९ ॥

प्रत्येतव्यं तदर्थ्यं पटुतरमतिभिः प्राक्तनं नूतनं वा ॥ २. ३० ।

तदात्वे नूतनं सर्वमायत्यां च पुरातनम् ।
न दोषायैतदुभयं न गुणाय च कल्पते ॥ २. ३१ ॥

निमीलयतु लोचने न हि तिरस्कृतो भास्करः
श्रवः स्थगयतु स्थिरं परभृतः किमु ध्वाङ्क्षति ।
स्वयं भ्रमतु बालिशो न खलु बम्भ्रमीति क्षितिः
कदर्थयतु मुष्टिभिः कथय किं नभः क्षुभ्यते ॥ २. ३३ ॥
एकयैव गुरोर्दृष्ट्या द्वाभ्यां वापि लभेत यत् ।
न तत्तिसृभिरष्टाभिः सहस्रेणापि कस्यचित् ॥ २. ६२ ॥
उपघ्नतरुविच्छेदे न किमुच्छिद्यते लता ॥ ३., ९ ॥
वर्णितगुणप्रकर्षा वर्णाश्रमनियमदेशकालमुखाः ।
अनवहितमानसानां भवन्ति नित्यं भयोदयस्थानम् ॥ ३. २७ ॥
तदस्तु लवणाकरे लवणसेतुराधित्सितः ॥ ३. ३० ॥
बहुजन्मसुकृतसिद्धं ब्रह्मविदपचारदूरगं पुरुषम् ।
अभिसरति नित्यरक्ता सत्वरमपवर्गसाधनी विद्या ॥ ३. ३५ ॥
मितप्रद्योतनिष्पाद्ये तमसामपसारणे ।
सहस्रेण करैः सार्द्धमुदेति दिवसेश्वरः ॥ ४. १५ ॥
तिष्ठतु संग्रामकथा द्यूते पुरुषस्य वादमात्रे वा ।
भवति परिभूतिलेशे कति कति विपदो निदर्शिताः कविभिः ॥
भयस्थानग्रन्थान्परिपठति निद्राति च मुहुः
स्वमात्मानं पश्यत्युपचरति देहं च विधिना ।
निवृत्तिं दुःखाब्धेरभिलषति रज्यत्यपि सुखे
द्विधावृत्त्या दुःख्यन्पुरुष इह डोलायत इव ॥ ४. ३४ ॥

प्रचेतुमनघां वृत्तिमपचेतुमपक्रियाम् ।
भजते विश्वकर्तारं भिषज्यन्तमिवातुरः ॥ ४. ३९ ॥
रागोपलिप्तदृष्टिः प्रलपति मुह्यति विघूर्णति स्खलति ।
युवतिमदिरामदान्धो युक्तायुक्तं न जानाति ॥ ४ ४५ ॥
गतस्रोतोरोधे न खलु यतितव्यं कृतधिया
तदारम्भः श्रेयानुपरितनुभीतिप्रतिभटः ॥ ४. ६० ॥
विधिमन्तरेण विहगेन कुतः
पयसोराशिक्ष्यत विवेकविधिः ।
कति वा दिनानि वद पर्यचिनो-
त्कलशीसुतः कबलयञ्जलधिम् ॥ ५. ६ ॥
निरवधिगुणग्रामे रामे निरागसि वागसि-
स्फुरणमुषितालोका लोका वदन्ति सदन्तिके ।
वरतनुहृतिं वालिद्रोहं मनागपसर्पणं
परिमितगुणे स्पष्टावद्ये मुधा किमुदासते ॥ ५. ३१ ॥
नवदलपुटे कल्प्या यस्य प्रभोरपि तल्पधी-
र्नटपरिबृढो यस्याधस्ताच्छ्रमं शमयिष्यते ।
वटविटपिनस्तस्याङ्कुराननुत्कटपल्लवा-
न्स्थपुटचटसापेक्षी भिक्षुः प्रतिक्षणमीक्षते ॥ ५. ३४ ।
अपि तपसि रतानामप्यधीतागमानां-
मपि यमनियमाद्यैरन्वहं शिक्षितानाम् ।

शैथिलयति समाधिं शिल्पिहस्तानपेक्षं

वरतनुमयचित्रं वासनाभित्तिलग्नम् ॥ ५. ५० ॥

तरतु विवित्सयाब्धिमधिरोहतु शैलतटीं

धमतु च धातुवर्गमभिगच्छतु शस्त्रमुखम् ।

तदिदमरुंतुदं यदुत बह्ववधाय धिया

धनमदमेदुरक्षितिभृदङ्गणचङ्क्रमणम् ॥ ६. ३ ॥

न कालतः कस्य गुणव्यतिक्रमः ॥ ६. ३३ ॥,

न धर्ममनुवर्तन्ते न कामं नापुनर्भवम् ।

अर्थमेकमुपाश्रित्य दुःखमेवोपभुञ्जते ॥ ६. ४२ ॥

जल्पति घूर्णति स्खलति मुह्यति हुंकुरुते

न च पदवीमवैति न च धाम न च त्रपते ।

विकृतिशतप्रसूतिविषमाशयदोषभुवा

धनमदिरामदेन धमतीव धरावलयम् ॥ ६. ४३

विदधातु धाम तमसा कृतेन किं

यदि वा न वेत्ति न विधिर्न वा वयम् ।

प्रथमोपकारि चरमं यतस्ततः

प्रतियोगिनो भवति तस्य सार्थता ॥ ६. ४५ ॥

दर्पणं किमपेक्षन्ते कङ्कणस्य निरीक्षणे ॥ ७. २९ ॥

अपैति पुरुषायुषं निमिषनिर्विशेषं नृणां

तृणाग्रजलबिन्दुवत्प्रतिकलं गलन्ति श्रियः ।

तथापि नृपमन्दिरप्रघणसीम्नि संक्षीयते

महानहह देहिनां द्रविणमोहदाहज्वरः ॥ ८. ४६ ॥

महेन्द्रप्रतिनन्द्यानां वपुरप्सरसामपि ।

त्वगसृङ्मांसमेदोऽस्थिमज्जशुक्लमयं न किम् ॥ ८. ६२ ॥

करचरणनखरदन्तप्रभृतिकमपि जगति सहजमितरदपि ।

प्रतिघसुभटस्य विश्वं प्रहरणमथवा विहर्तुमुपकरणम् ॥८.७०॥

विबुधमहिते मेरौवैरावणः करटी मुहुः

कषतु करटं कण्डूलं स्वं क्षरन्मदकर्दमम् ।

भजतु च तटक्रीडां पीडाभिसन्धिरसौ दृढं

न तु मलिनता नापि क्षोभः क्षमाभृति संभृतः ॥८. ७८॥

न शापो नाभिचरणं न वह्निर्न विषं तथा ।

नास्त्राणि न च शस्त्राणि यथा तीक्ष्णतमा क्षमा ॥ ८. ७९ ॥

अहार्येण कदाप्यन्यैरसंहार्येण केनचित् ।

तितिक्षाकवचेनैव सर्वं जयति संवृतः ॥ ८. ८० ॥

मृग्यं केसरिणो विधित्सितरणे रङ्कौ परं कौतुकं

क्रीडाखण्डितचण्डवारणघटातन्त्रम्वतन्त्रश्रियः ॥ ८. ८५ ॥

अनिभृततटक्रीडोत्कण्ठाविजृम्भितसंभ्रमे

कलभचरणे लूतातन्तुः कथं निगलायते ॥ ९. १५ ॥

सत्कारकालकूटं तरुणीकुणपं सभाभुजङ्गीं च ।

परिहरति राजधानीकुम्भीपाकं च गुप्तमाहात्म्यः ॥ ९. १९ ॥

सुमतिबहुमतेन स्वात्मना सत्त्वधाम्ना
    बहिरबहिरुदीर्णे वारिते वैरिवर्गे ।
जनयति पुरुषस्य ज्यायसीं चित्तवृत्तिं
    समविषमविभेदी सार्वभौमो विवेकः ॥ ९. ३४ ॥
कलत्रसुतसोदरप्रभृतिकल्पनाबन्धै-
    रशक्यविनिवर्तनैरहितशृङ्खलैर्यन्त्रितः ।
निसर्गसुहृदि प्रभौ निहितगुप्तिभारः पुमा-
    नुपस्थितमुपस्थितं हितमशेषमुद्वीक्षते ॥ १०. ३६ ॥
मृत्युरद्येति विदुषा यत्कर्तव्यं हितैषिणा ।
तदेव नित्यं कर्तव्यमनिर्द्धारितमृत्युना ॥ १०. ४६ ॥

## प्रसन्नराघवम् ।

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् ।
गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः ॥ १. ४ ॥
गुणग्रामाभिसंवादि नामापि हि महात्मनाम् ।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ १. ५ ॥
अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
    परभणितिषु तोषं यान्ति सन्तः कियन्तः ।

निजघनमकरन्दस्यन्दपूर्णालवालः
    कलशसलिलसेकं नेहते किं रसालः ॥ १. १९ ॥
वार्ता च कौतुकवती विमला च विद्या
    लोकोत्तरः परिमलश्च कुरङ्गनाभेः ।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
    मेतत्त्रयं प्रसरति स्वयमेव भूमौ ॥ २. २ ॥
मधुरविधुरमिश्राः सृष्टयो हा विधातुः ॥ २. २८ ॥
किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि ।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरः पदम् ॥ ४. २७ ॥
न ज्ञातुं नाप्यविज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
सुजनः स्वजने जातं विपत्पातं समीहते ॥ ५. ३ ॥
इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् ।
यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ ५. ३ ॥
प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति किंतु सहसा भुवनान्यपि तमसि मज्जन्ति ॥ ५. ५ ॥
प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् ।
भवन्ति च सुखोदर्का विपदोऽपि महात्मनाम् ॥ ५. ४९ ॥
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः ॥ ६. १८ ॥
चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो
    नव्यां वल्लीं दवदहनकश्चान्दनीं दन्दहीति ।

अप्युन्मत्तः कुवलयमयीं मालिकामालुनीते
मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण ॥ ६. ३२ ॥
उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ ७. १ ॥
आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः ।
धूसरापि कला चान्द्री किं न बध्नाति लोचनम् ॥ ७. ९ ॥

## मल्लिकामारुतम् ।

प्रादुःष्यात्पण्डितानां कविवचसि कथं प्रत्ननूत्नत्वचिन्ता
विद्येरन्यद्यवद्यान्यभिजहति तदा गृह्णते स्युर्गुणाश्चेत् ।
अन्यस्त्वन्यप्रमाणः परमवमनुते छिद्यते तावता किं
नायं रत्नस्य दोषो दृषदिति यदिदं क्षिप्रमन्धाः क्षिपन्ति ॥ १. ६ ॥
ये के विचित्ररसशालिषु सत्कवीनां
सूक्तेषु कर्णपथगामिषु नाद्रियन्ते ।
ते मालतीपरिमलेष्वपि कन्दलत्सु
नासापुटं करतलेन पिदध्युरेव ॥ १. ७ ॥
सन्तश्चेदिह गुणबिन्दवो बुधस्त्व-
त्संतुष्टः कबलयति स्फुटेऽपि दोषे ।

संयुक्तानपि पयसः कणान्विविञ्च-
　न्नम्भस्तो ग्रसति हि मङ्क्षु मल्लिकाक्षः ॥ १. ८ ॥
कविहृदयेष्वनसूया कस्तूरीकर्दमेष्वमालिन्यम् ।
अक्षारता पयोधाववनीपालेषु पाण्डित्यम् ॥ १. १३ ॥
वस्तुनि चिराभिलषिते कथमपि दैवात्प्रसक्तसंघटने ।
प्राक्प्राप्तान्यपि बहुशो दुःखानि परं सुखानि जायन्ते ॥१. २१॥
को नाम कल्पद्रुमुपघ्नयन्तीं
कारस्करे कर्षति बालवल्लीम् ॥ १. २६ ॥
सत्कवीन्द्रमतिवद्यदृच्छया
　चित्रशिल्पिकरवर्णतूलिका ।
तत्तदुल्लिखितुमप्यलक्षितं
　वस्तुतत्त्वमखिलं प्रगल्भते ॥ २. १० ॥
अपि देशविप्रकृष्टान्यदृष्टपाशैर्द्रुतं विकृष्टानि ।
जननान्तरेऽपि झटिति स्वामिनमनुयान्ति हि स्वानि ॥२. १२॥
यत्कण्टकानां चरणक्षतानां
　निष्कासनं कण्टकतो लघीयः ॥ ३. ११ ॥
उत्प्रेक्षते नयनयोरसतोऽपि भावा-
　न्मोहेन कल्पयति मौग्ध्यमनुन्मुखत्वे ।
योषासु रागचपलो विवृताभिलाषः
　प्राप्यावमानमनुतापमुपैति मूढः ॥ ३. १७ ॥

प्राथमिकी घनवृष्टिः प्राप्ता शिखिनो निदाघतप्तस्य ।
आकस्मिकेन सा पुनरपनीता क्वापि पवनेन ॥ ३. ४२ ॥

आशङ्कते ह्यपायानपदेऽपि स्नेहकातरं चेतः ॥ ४. ५ ॥

शुभमितरद्वा प्राच्यं कर्म सुखं दोग्धि दुःखं वा ।
दैवं पुनस्तटस्थं तदुभयमनुभावयदुदास्ते ॥ ४. २८ ॥

समहृदयौ चेत्तरुणौ किं प्रतिकूलेन बन्धुवर्गेण ।
अनुकूलेनापि पुनर्नार्थस्तौ चेद्विरागौ स्तः ॥ ४. ३३ ॥

तीव्रोष्णदुर्विषहवीर्यभृतः परेषां
तेजस्विनो न गणयन्ति वपुर्महत्त्वम् ।
यत्पद्मरागशकलाकृतिरद्रितुङ्गं
कार्त्स्न्येन भस्मयति काष्ठचयं स्फुलिङ्गः ॥ ५. ४१ ॥

किं जृम्भमाणकिरणस्य तिरस्क्रियायां
बालस्य वासरमणेरलमन्धकाराः ॥ ५. ४९ ॥

शुश्रूषामनुरुन्धती गुरुजने वाक्ये ननान्दुः स्थिता
दाक्षिण्यैकपरायणा परिजने स्निग्धा सपत्नीष्वपि ।
संनद्धातिथिसत्कृतौ गृहभरे नैस्तन्द्र्यमाबिभ्रती
वत्से किं बहुना भजस्व कुशलं भर्तुः प्रिये जाग्रती ॥ १६. २५

छन्दानुवृत्तिपरता व्याजेनालापसंभेदः ।
हठवैमुख्यमितीमे मुग्धाविस्रम्भणोपायाः ॥ ७. २ ॥

यावद्यूनोः परिणयविधिः संप्रवर्तेत ताव-

द्विघ्नच्छित्त्यै विहितधृतयो बन्धवो व्याप्रियेरन् ।। ७. ४ ॥

न वशंवदयापि नाकलक्ष्म्या

न च वित्तेन तथा सुधारसेन ।

प्रमदं भजते मनः स्वयं

परिपूर्णेन यथा मनोरथेन ॥ ८. २ ॥

प्रणयवचनमर्थिभिः प्रयुक्तं

यदयमहो न शृणोति दुर्मदान्धः ।

अथ कथमपि चेत्करोति कर्णे

नयननिमीलितमुत्तरं विधत्ते ॥ ९. ४१ ॥

शिष्यस्थं गुणमवलोक्य लोककान्तं

विद्वद्भिर्गुरुरपि तद्गुणो हि कल्प्यः ॥ ९. ४४ ॥

नाकोऽपि नरकस्तस्य यस्य मित्रं न संनिधौ ॥ ९. ७८ ॥

सौहार्दशालि हृदयं संतोषस्मेरमेदुरा दृष्टिः ।

संभावना सतामियमन्यस्त्वाचारडम्बरः कथितः ॥ १०. ४२

जायते सह कन्याभिः शोकशङ्कुः कुटुम्बिनाम् ।

भज्यते च स्वयं तासां लब्धे सुसदृशे वरे ॥ १०. ६३ ॥



श्रीः ॥

# ॥ साहित्यरत्नमञ्जूषा ॥

## कादम्बरी ।

किमिव हि दुष्करमकरुणानाम् ।

अतिकष्टास्वप्यवस्थासु जीवितनिरपेक्षा न भवन्ति खलु जगति सर्वप्राणिनां प्रवृत्तयः ।

नास्ति जीवितादन्यदभिमततरमिह जगति सर्वजन्तूनाम् ।

सर्वथा न कंचिन्न खलीकरोति जीविततृष्णा ।

प्रायेणाकारणमित्राण्यतिकरुणार्द्राणि च सदा खलु भवन्ति सतां चेतांसि ।

शुष्कनलकाशकुसुमनिपतितानलचटुलवृत्ति नित्यमसहिष्णु तपस्विनां तनुतपसामपि तेजः प्रकृत्या भवति ।

पुण्यानि हि नामग्रहणान्यपि महामुनीनाम्, किं पुनर्दर्शनानि

प्रायो महाभूतानामपि दुरभिभवानि भवन्ति तेजांसि ।

अनाथपरिपालनं हि धर्मः ।

प्रमुदितप्रजस्य हि परिसमाप्तसकलमहीप्रयोजनस्य नरपतेर्विष-
योपभोगलीला भूषणम्, इतरस्य तु विडम्बना ।

अपुत्राणां किल न सन्ति लोकाः शुभाः ।

किमत्र क्रियतां दैवायत्ते वस्तुनि ।

जन्मान्तरकृतं हि कर्म फलमुपनयति पुरुषस्येह जन्मनि ।

नहि शक्यं दैवमन्यथाकर्तुमभियुक्तेनापि ।

परं हि दैवतमृषयः ।

अमोघफला हि मुनिजनसेवा भवति ।

धर्मपरायणानां सदा समीपसंचारिण्यः कल्याणसंपदो भवन्ति ।

आवेदयन्ति हि प्रत्यासन्नमानन्दमग्रपातीनि शुभानि निमित्तानि ।

अवितथफलाश्च प्रायो निशावसानसमयदृष्टा भवन्ति स्वप्नाः ।

सत्योऽयं लोकवादः, 'यत्संपत्संपदं विपद्विपदमनुबध्नाति' इति ।

दैवतान्यपि हि मुनिशापवशादुज्झितनिजशरीरकाणि शापव-
चनोपनीतानि शरीरान्तराण्यध्यासत एव ।

अपरिणामोपशमो दारुणो लक्ष्मीमदः ।

गर्भेश्वरत्वमभिनवयौवनत्वमप्रतिमरूपत्वममानुषशक्तित्वं चेति म-
हतीयं खल्वनर्थपरम्परा ।

अकारणं च भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य ।

आत्मकृतानां हि दोषाणां नियतमनुभवितव्यं फलमात्मनैव ।

अहो जगति जन्तूनामसमर्थितोपनतान्यापतन्ति वृत्तान्तान्तराणि ।

नास्ति खल्वसाध्यं नाम तपसाम् ।

जनयति हि प्रभुप्रसादलेशोऽपि प्रागल्भ्यमधीरप्रकृतेः ।

अहो दुर्निवारता व्यसनोपनिपातानाम् ।

सर्वथा न कंचन न स्पृशन्ति शरीरधर्माणमुपतापाः ।

बलवती हि द्वन्द्वानां प्रवृत्तिः ।

न हि क्षुद्रनिर्घातपाताभिहता चलति वसुधा ।

अदूरकोपा हि मुनिजनप्रकृतिः ।

धैर्यधना हि साधवः ।

अयत्नेनैव खलूपहासास्पदतामीश्वरो नयति जनम् ।

प्राणपरित्यागेनापि रक्षणीयाः सुहृदसवः ।

न हि किंचिन्न क्रियते ह्रिया ।

सर्वथा दुर्लभं यौवनमस्खलितम् ।

मूढो हि मदनेनायास्यते ।

सुखमुपदिश्यते परस्य ।

नास्ति खल्वसाध्यं नाम भगवतो मनोभुवः ।

सततमतिगर्हितेनाकृत्येनापि रक्षणीयान्मन्यन्ते सुहृदसून्साधवः ।

प्रियतमाभिसरणप्रवृत्तस्य जनस्य किमिव कृत्यं बाह्येन परिजनेन ।

अतिक्रान्तान्यपि हि संकीर्त्यमानानि प्रियजनविश्वासवचनान्यनुभवसमां वेदनामुपजनयन्ति सुहृज्जनस्य दुःखानि ।

प्रायेण चैवंविधा दिव्याः स्वप्नेऽप्यविसंवादिन्यो भवन्त्याकृतयः

अदुर्लभं हि मरणमध्यवसितम् ।

क्लेशभीरुरकृतज्ञः सुखासङ्गलुब्धो लोकः स्नेहसदृशं कर्मानुष्ठातुमशक्तो निष्फलेनाश्रुपातमात्रेण स्नेहमुपदर्शयन् रोदिति ।

कथंच तादृशानामप्राकृताकृतीनां महात्मनामवितथगिरां गरीयसापि कारणेन गिरि वैतथ्यमास्पदं कुर्यात् ।

अचिन्त्यो हि महात्मनां प्रभावः ।

बहुप्रकाराश्च संसारवृत्तयः ।

आश्चर्यातिशययुक्ताश्च तपःसिद्धयः ।

अनेकविधाश्च कर्मणां शक्तयः ।

प्रभवति हि भगवान्विधिः ।

आत्मेच्छया न शक्यमुच्छ्वसितुमपि ।

अतिपिशुनानि चाम्यैकान्तनिष्ठुरस्य दैवहतकस्य विलसितानि न क्षमन्ते दीर्घकालमव्याजरमणीयं प्रेम ।

प्रायेण च निसर्गत एवानायतस्वभावभङ्गुराणि सुखानि, आयतस्वभावानि च दुःखानि ।

कथमप्येकस्मिन् जन्मनि समागमो जन्मान्तरसहस्राणि च विरहः प्राणिनाम् ।

धीरा हि तरन्त्यापदम् ।

सुहृद्दुःखखेदिते हि मनसि कैव सुखाशा ।

दुःखितमपि जनं रमयन्ति सज्जनसमागमाः ।

दुर्लभो हि दाक्षिण्यपरवशो निर्निमित्तमित्रमकृत्रिमहृदयो विदग्धजनः ।

तिमिरोपहतेव यूनां दृष्टिरल्पमपि कालुष्यं महत्पश्यति ।

स्वप्न इवाननुभूतमपि मनोरथो दर्शयति ।

अप्रतिपाद्या हि परस्वंता सज्जनविभवानाम् ।

प्रणयिजनप्रत्याख्यानपराङ्मुखी च दाक्षिण्यपरवती महत्ता सताम् ।

न च तादृशी भवति याचमानानाम्, यादृशी ददतां लज्जा ।

परोपकारोपकरणं शरीरम् ।

तृणलवलघु च जीवितम् ।

बहुभाषिणो न श्रद्दधाति लोकः ।

जनयन्ति हि पश्चाद्वैलक्ष्यमभूमिपातिता व्यर्थाः प्रसादामृतवृष्टयो महताम् ।

अपरिभवनीयो हि कुमारिकाजनो यूनाम् ।

आजन्मक्रमाहितो बलवान् जननीस्नेहः ।

अमोच्यं तातचरणशुश्रूषासुखम् ।

हारिणी गुरुजनलालना ।

मृदुस्वभावमपि जलमिव मुक्ताफलतामुपगतं कठिनीभवत्युत्कण्ठितं हृदयमबलाजनस्य ।

केन कदावलोकितो ज्योत्स्नारहितश्चन्द्रमाः ।

येन केनचिदपह्रियन्त एव रसिकहृदयाः परिणामधीरमतयोऽपि

पीडा च सुखैकहेतोर्वल्लभजनादेवासंभाव्या या समुत्पद्यते, तत्रै-
व हि न किंचिन्न क्रियते ।

नह्यतः परमपरं कष्टतरं किंचिदपि पीडाकारणम्, यद्गुणेषु
वर्तमानो दोषेषु संभाव्यते ।

भूतिपरामृष्टा दर्पणा इवाभिमुख्येन सर्वं प्रतीपं गृह्णन्ति ।

सर्व एव ह्यनाक्षिप्तचेताः प्रवर्तते स्वहिताय परहिताय च ।

एतत्खलु प्रदीपेनाग्नेः प्रकाशनम् ।

प्राज्ञस्यापि बहुश्रुतस्यापि विवेकिनोऽपि धीरस्यापि सत्त्ववतो-
ऽप्यवश्यं दुःखातिपातेन विशुद्धमपि वर्षसलिलेन सर इव मानसं
कलुषीक्रियते सर्वस्य ।

किमस्ति कश्चिदसावियति लोके, यस्य निर्विकारं यौवनमति-
क्रान्तम् ।

परिणामेऽपि पुण्यवतां केषांचिदेव हि केशैः सह धवलिमान-
मापद्यन्ते चरितानि ।

स्वप्नायमानानामपि यद्गुरूणां मुखेभ्यो निष्क्रामति शुभमशुभं
वा शिशुषु, तदवश्यं फलति ।

गुरवो हि दैवतं बालानाम् ।

यथैवाशिषो गुरुजनवितीर्णा वरतामापद्यन्ते, तथैवाक्रोशाः शाप-
ताम् ।

मिथ्यापि तत्तथा, यथा गृहीतं लोकेन ।

प्रसिद्धिरत्रायशसा यशसा वा दोषगुणाश्रया फलवती ।

परत्र फलदायी कुत्रोपयुज्यते परमार्थः ।

यस्यामेव वेलायां चित्तवृत्तिः, सैव वेला सर्वकार्येषु ।

सर्व एव हि जगति जन्मनो वयस आकृतेर्वा सदृशमाचरन्न वचनीयतामेति ।

शरणागतपरित्राणं हि तपस्विनामपि धर्म एव ।

तपसो हि सम्यक्कृतस्य नास्त्यसाध्यं नाम किंचित् ।

यत्खल्वनालोचितावधि दुःखावसानमेव दुःखम्, तन्मरणभीरोर्भवतु नाम शोकावेगाय; यत्पुनः सुखोदर्कम्, तत्पुरःस्थितया सुखप्रत्याशयैवान्तरितं नापतति हृदये ।

भृत्या अपि त एव, ये संपत्तेर्विपत्तौ सविशेषं सेवन्ते ।

अनुपात्तं हि हृदयताडनमपि कुर्वद्भिर्न लभ्यत एवात्रात्मेच्छया ।

सर्वाभिवाञ्छितप्राप्तिस्तु महतः पुण्यराशेः फलम् ।

सुहृदस्तु स्वयं दुःखिता अपि विस्मृत्यात्मदुःखं सुहृद्दुःखापनोदायैव यतन्ते ।

न खलु वैदिकानामवैदिकानां वा कर्मणामसाध्यं नाम किंचिदपि ।

अनतिक्रमणीया हि नियतिः ।

धन्याश्च जरापीतसारतनवस्तनयेष्वात्मभारमासज्य लघुशरीराः परलोकगमनं साधयन्ति ।

लोकेऽपि च प्रायः कारणगुणभाञ्ज्येव कार्याणि दृश्यन्ते ।
सर्व एव ह्यविनयप्रवृत्तोऽनुतापाद्विना न निवर्तते ।
यत्रैव निरतिशयं संपत्सुखम्, तदेव वनमपि भवनम् ।

## हर्षचरितम् ।

असंस्कृतमतयोऽपि जात्यैव द्विजन्मानो माननीयाः ।
उद्दामप्रसृतेन्द्रियाश्वसमुत्थापितं हि रजः कलुषयति दृष्टिमनक्ष-
 जिताम् ।
विशुद्धया हि धिया पश्यन्ति कृतबुद्धयः सर्वानर्थानसतः सतो
 वा ।
निसर्गविरोधिनी चेयं पयःपावकयोरिव धर्मक्रोधयोरेकत्र वृत्तिः ।
क्षमा हि मूलं सर्वतपसाम् ।
अतिरोषणश्चक्षुष्मानप्यन्ध एव जनः ।
न हि कोपकलुषिता विमृशति मतिः कर्तव्यमकर्तव्यं वा ।
कुपितस्य प्रथममन्धकारीभवति विद्या, ततो भ्रुकुटिः ।
विसंस्थुला गुणवत्यपि जने दुर्जनवन्निर्दाक्षिण्याः क्षणभङ्गिन्यो
 दुरतिक्रमा दैवस्य वामा वृत्तयः ।
निष्कारणा च निकारकणिकापि कलुषयति मनस्विनोऽपि मान-
 समसदृशजनादापतन्ती ।

महतां चोपरि निपतन्नणुरपि सृणिरिव करिणां क्लेशः कदर्थ-
नायालम् ।

दारयति दारुणः क्रकचपात इव हृदयं संस्तुतजनविरहः ।

पुराकृते कर्मणि बलवति शुभेऽशुभे वा फलकृति तिष्ठत्यधिष्ठा-
तरि प्रष्ठे पृष्ठतश्च, कोऽवसरो विदुषि शुचाम् ।

सहजलज्जाधनस्य प्रमदाजनस्य प्रथमाभिभाषणमशालीनता ।

प्रथमदर्शने चोपायनमिवोपनयति सज्जनः प्रणयम् ।

अयत्नेनैव चातिनम्रे साधौ धनुषीव गुणः परां कोटिमारोहति
विस्रम्भः ।

जनयन्ति च विस्मयमतिधीरधियामप्यदृष्टपूर्वा दृश्यमाना जग-
ति स्रष्टुः सृष्ट्यतिशयाः ।

सतां हि प्रियंवदता कुलविद्या ।

दूरे तावदन्योन्यस्यालापनम्, अभिजातैः सह दृशोऽपि मिश्री-
भूता महतीं भूमिमारोपयन्ति ।

उत्तमानां च चिरन्तनता जनयत्यनुजीविन्यपि जने कियन्मात्र-
मपि मन्दाक्षम् ।

अक्षीणः खलु दाक्षिण्यकोशो महताम् ।

अलसः खलु लोकः, यदेवं सुलभसौहार्दानि येन केनचिन्न
क्रीणाति महतां मनांसि ।

सोऽयमौदार्यातिशयः कोऽपि महात्मनामितरजनदुर्लभः, येनो-

पकरणीकुर्वन्ति त्रिभुवनम् ।

न किंचिन्न कारयत्यसाधारणी स्वामिभक्तिः ।

न सन्त्येव ते, येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः ।

सलिलानीव गतानुगतिकानि लोलानि खलु भवन्त्यविवेकिनां मनांसि ।

प्रायेण प्रथमे वयसि सर्वस्यैव चापलैः शैशवमपराधि ।

स्वैरिणो विचित्राश्च लोकस्य स्वभावाः प्रवादाश्च ।

अनपाचीनचित्तवृत्तिग्राहिण्यो हि भवन्ति प्रज्ञावतां प्रकृतयः ।

उपदिशन्ति हि विनयमनुरूपप्रतिपत्त्युपपादनेन वाचं विनापि भर्तव्यानां स्वामिनः ।

अयस्कान्तमणय इव लोहानि नीरसनिष्ठुराणि क्षुल्लकानामप्याकर्षन्ति मनांसि महतां गुणाः ।

शक्याशक्यपरिसंख्यानशून्याः प्रायेण स्वार्थतृषः ।

परगुणानुरागिणी प्रियजनकथाश्रवणरसरभसमोहिता च, मन्ये, महतामपि मतिरपहरति प्रविवेकम् ।

भर्तृचित्तानुवर्तिन्यश्चानुजीविनां प्रकृतयः ।

उपनयन्ति हि हृदयमदृष्टमपि जनं शीलसंवादाः ।

माननीयं च गुरुवन्नोल्लङ्घनमर्हति गुरोरासनम् ।

प्रतनुगुणग्राह्याणि कुसुमानीव हि भवन्ति सतां मनांसि ।

विद्वत्संमताः श्रूयमाणा अपि साधवः शब्दा इव सुधीरेऽपि हि मनसि यशांसि कुर्वन्ति ।

अनुक्तेष्वपि शरीरादिषु साधूनां स्वामिन एव प्रणयिनः ।

धनोष्मणा म्लायत्यलं लतेव मनस्विता ।

स्वार्थालसाः परोपकारदक्षाश्च प्रकृतयो भवन्ति भव्यानाम् ।

भुजे वीर्यं निवसति, न वाचि ।

वीराणां त्वपुनरुक्ताः परोपकाराः ।

अदूरव्यापिनः फल्गुचेतसामलसानां मनोरथाः ।

सतां तु भुवि विस्तारवत्यः स्वभावेनैवोपकृतयः ।

संपत्कणिकामपि प्राप्य तुलेव लघुप्रकृतिरुन्नतिमायाति ।

प्रत्युपकारदुष्प्रवेशास्तु भवन्ति धीराणां हृदयावष्टम्भाः ।

भक्तजनानुरोधविधेयानि तु भवन्ति देवतानां मनांसि ।

दर्पणमिवानुप्रविश्यात्मीयां प्रकृतिं संक्रामयन्ति पल्लवकाः ।

स्वप्ना इव मिथ्यादर्शनैरसद्बुद्धिं जनयन्ति विप्रलम्भकाः ।

सेयं सर्वाभिभाविनी शोकाग्नेर्दाहशक्तिः, यदपत्यत्वे समानेऽपि जातायां दुहितरि दूयन्ते सन्तः ।

प्रायेण च सत्स्वप्यन्येषु वरगुणेष्वभिजनमेवानुरुध्यन्ते धीमन्तः

लोके हि लोहेभ्यः कठिनतराः खलु स्नेहमया बन्धनपाशाः

विधुरयति धीमतोऽपि धियमतिदुर्धरो बान्धवस्नेहः सर्वप्रमाथी

प्रजाभिस्तु बन्धुमन्तो राजानः, न ज्ञातिभिः ।

कामं स्वयं न भवति, न तु श्रावयत्यप्रियं वचनमरतिकरमितर इवाभिजातो जनः।

स्वामिनि दुर्लभीभवति भवन्त्यसवो भ्रियमाणा ह्रीहेतवो लोके।

दुःखदग्धानां च भूतिरमङ्गला चाप्रशस्ता च निरुपयोगा च भवति।

औरसदर्शनं हि यौवनं शोकस्य।

यं च किल शोकः समभिभवति, तं कापुरुषमाचक्षते शास्त्रविदः।

स्त्रियो हि विषयः शुचाम्।

कपिरचपलः, कविरमत्सरः, वणिगतस्करः, राजसूनुरदुर्विनीतश्च जगति दुर्लभः।

प्रतापसहाया हि सत्त्ववन्तः।

पिशाचानामिव नीचात्मनां चरितानि छिद्रप्रहारीणि प्रायशो भवन्ति।

सोऽयं कुरङ्गकैः कचग्रहः केसरिणः।

हरिणार्थमतिह्रेपणः सिंहसंभारः।

तृणानामुपरि कति कवचयन्त्याशुशुक्षणयः।

न हि कुलशैलनिवहवाहिनो वायवः संनह्यन्त्यतितरले तूलराशौ।

न वा सुमेरुवप्रप्रणयप्रगल्भा दिक्करिणः परिणमन्त्यणीयसि वल्मीके।

करिण इव करीरं कोमलमपि कवलयतः कृतान्तस्य कः परिपन्थी।

नत्वाश्वेवास्तमुपगतवत्यपि त्रिभुवनचूडामणौ सवितरि वेधसा-
दिष्टः सत्पथशत्रोरन्धकारस्य निग्रहाय ग्रहषण्डविहारैकह-
रिणाधिपः शशी ।

विनयविधायिनि भग्नेऽपि चाङ्कुशे विद्यत एव व्यालवारणस्य
विनयाय सकलेमत्तमातङ्गकुम्भस्थलस्थिरशिरोभागभिदुरः
खरतरः केसरिनखरः ।

छत्रच्छायान्तरितरवयो विस्मरन्त्यन्यं तेजस्विनं जडधियः ।

द्वयमेव च चतुःसागरसंभूतस्य भूतिसंभारस्य भाजनं प्रतिप-
क्षदाहि दारुणं बडबामुखं वा महापुरुषहृदयं वा ।

न च स्वप्नदृष्टनष्टेष्विव क्षणिकेषु शरीरेषु निबध्नन्ति बन्धुबुद्धिं
प्रबुद्धाः ।

स्थायिनि यशसि शरीरधीर्वीराणाम् ।

अनवरतप्रज्वलिततेजःप्रसरभास्वरस्वभावं च मणिप्रदीपमिव क-
लुषः कज्जलमलो न स्पृशत्येव तेजस्विनं शोकः ।

सर्वथा लूतातन्तुच्छटाच्छिदुरास्तुच्छाः प्रीतयः प्राणिनाम् ।

तत्त्वदर्शिन्यो न हि भवन्त्यविदग्धानां धियः ।

बालविद्याः खलु महतामुपकृतयः ।

मैत्री च प्रायः कार्यव्यपेक्षिणी क्षोणीभृताम् ।

पर्यायान्तरितं दास्यमनुतिष्ठन्ति सुहृदः ।

सकलजगदुत्तापनपटवोऽपि शिशिरायन्ते त्रिभुवननयनानन्दकरे

न ह्यलमतिनिपुणोऽपि पुरुषो नियतिलिखितां लेखामतिक्रमितुम् ।

शीलं हि मदोन्मादयोरमार्गेणाप्युचितकर्मस्वेव प्रवर्तनम् ।

आकल्पसारो हि रूपाजीवाजनः ।

केन देवो मातरिश्वा बद्धपूर्वः ।

स्त्रियश्चोपधीनामुद्भवक्षेत्रम् ।

कः सचेतनः स्त्रियमभिकामयमानां नाभिनन्दति ।

अचिन्त्यो हि मणिमन्त्रौषधीनां प्रभावः ।

शत्रुवधो मित्ररक्षा च करणीयमेव ।

किं हि बुद्धिमत्प्रयुक्तं नाभ्युपैति शोभाम् ।

एष खलु क्षत्रधर्मः, यद्बन्धुरबन्धुर्वा दुष्टो निरपेक्षं निग्राह्यः ।

स्त्रीधर्म एषः, यददुष्टस्य दुष्टस्य वा भर्तुर्गतिर्गन्तव्येति ।

राजावमानितं दैवो दण्डः स्पृशति ।

नृशंसो वेशः ।

नास्त्यदाराणामननुगुणदाराणां वा सुखं नाम ।

सेयमाकृतिर्न व्यभिचरति शीलम् ।

अविमृश्यकारिणां हि नियतमनेकाः पतन्त्यनुशयपरम्पराः ।

दौर्भाग्यं नाम जीवन्मरणमेवाङ्गनानाम् ।

पतिरेकदैवतं वनितानाम् ।

सैषा सज्जनाचरिता सरणिः, यदणीयसि कारणेऽनणीयानादरः संदर्श्यते ।

इह जगति हि न निरीहदेहिनं श्रियः संश्रयन्ते ।

श्रेयांसि च सकलान्यनलसानां हस्ते नित्यसांनिध्यानि ।

न च निषेधनीया गरीयसां गिरः ।

बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते

न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाधानाय ।

दिव्यं हि चक्षुः भूतभवद्भविष्यत्सु व्यहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहतवृत्ति ।

अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः ।

न हि मुनिरिव नरपतिरुपशमरतिरभिभवितुमलमरिकुलम् ।

दैव्याः शक्तेः पुरो न बलवती मानवी शक्तिः ।

## तिलकमञ्जरी ।

समग्राण्यपि कारणानि न प्राग्जन्मजनितकर्मोदयक्षणनिरपेक्षाणि फलमुपनयन्ति ।

धार्मिकजनानुवृत्त्यभिमुखानि हि भवन्ति सर्वदा धर्मतत्त्ववेदिनां हृदयानि ।

केवलमभूमिर्मुनिजनो विभवानाम् ।

विषयोपभोगगृध्नवो हि धनान्युपाददते ।

केवलं कर्तव्येषु दृढमप्रमादिना भवितव्यम् ।

आलोचितव्यं च सम्यक्प्रज्ञया प्रस्तावोचितमनुष्ठानम् ।

प्रज्ञोद्यमावरणिमन्थाविव हविर्भुजः पितरौ कार्यसिद्धेः; तौ हि
पुरुषव्यापारानुगृहीतौ, नास्ति तद्वस्तु, यन्न साधयतः ।

कर्तव्यं च किमपि कालोचितमकृतकालक्षेपेण ख्यातेः सुखस्य
चामुष्मिकस्य साधकं कुशलमनुष्ठानम् ।

न हि त्र्यम्बकजटाकलापमन्तरिक्षं वा विहाय क्षीणोऽपि हरिण-
लक्ष्मा क्षितौ पदं बध्नाति ।

संभवन्ति च भवार्णवे विविधकर्मवशवर्तिनां जन्तूनामनेकशो
जन्मान्तरजातसंबन्धैर्बन्धुभिः सुहृद्भिरर्थैश्च नानाविधैः सार्ध-
मबाधिताः पुनस्ते संबन्धाः ।

स्मरणानि चात्यन्तविस्मयकराणि पूर्वजातेः ।

सेवकाश्च फलप्राप्तिकामाः प्रथममुपचारेण गृहीतवाक्यं परि-
ग्रहलोकमावर्जयन्ति; ततस्तेन कृतपक्षपरिग्रहेण ग्राहितसं-
बन्धाः प्रभूणामसक्तमात्मसक्तिमुपदर्शयन्ति ।

सुचिरकालसंचितेन सततानुगामिना सद्भृत्येनेन शुभकर्मणा
कृतरक्षाणां महापुरुषाणां सर्वदापि दूरवर्तीन्येव दुरितानि ।

विवेकिना विचारणीयं वस्तुतत्त्वम्; नोज्झितव्यो निजावष्टम्भः;
स्तम्भनीयं मनः !

सततमचलप्रकृतिना हि पुरुषेण भवितव्यम् ।

व्यक्तम्; जगत्यदृष्टवशाद्विशालगुणसंपद्भिरप्यसुलभाः स्वल्प-
गुणैरपि सुप्रापाः प्रसिद्धयो भवन्ति ।
प्रथितगुणस्थानस्थितस्यासतोऽपि हि माहात्म्यमाविर्भवति ।
पद्मिनीदलोत्सङ्गसङ्गी जलबिन्दुरपि मुक्ताफलद्युतिमालम्बते ।
मृगाङ्कबिम्बचुम्बी कलङ्कोऽप्यलंकारसरणिं धत्ते ।
कुरङ्गलोचनालोचनलब्धपदमञ्जनमपि मण्डनायते ।
अहो विरसता संसारस्थितेः ।
अहो विचित्रता कर्मपरिणतीनाम् ।
अहो यदृच्छाकारितायामभिनिवेशो विधेः ।
अहो भङ्गुरस्वभावता विभवानाम् ।
सर्वथातिगहनो बलीयानेष संसारमोहः ।
अदृष्टपारे संसारे भङ्गुरस्वभावेषु विभवादिषु सर्वभावेषु कर्म-
परतन्त्राणां प्राणिनां सर्वमपि संभवति ।
महिमानमिच्छता पुरुषेण पूर्वे वयस्यपूर्वा सर्वापि परयोषि-
त्प्रायशो न बहु भाषणीया ।
को हि जानाति सम्यग्देवगतिम् ।
अविरुद्धो हि राजकन्याजनस्य स्वयंवरविधिः ।
किं करोतु सततमवहितोऽपि पुरुषश्छन्नवपुषां प्रकृत्यैव मायिनाम् ।
यदेव गुरवः किंचिदादिशन्ति, यदेव कारयन्ति कृत्यमकृत्यं वा,
तदेव निर्विचारैः कर्तव्यम्; विचारो हि तद्वचनेष्वनाचारो महान् ।

कुटिलस्वभावाः स्त्रियः ।

निसर्गसरलः पुरुषवर्गः ।

क्रमागतो महापुरुषमार्गः कुलाभिमानिभिरत्याज्यः ।

स्वदारपरिपालनकर्म गृहमेधिनां धर्मः ।

पश्य दुरात्मनो दैवस्य गतिम् ।

प्रनष्टजीवितानां दुर्घटं पुनः प्राणनम् ।

अहो निरवधिप्रचारो विधिः ।

नास्त्यगोचरः पुराकृतकर्मणाम् ।

अशक्यप्रतीकारा कृतान्तशक्तिः ।

अव्याहता गतिः सर्वत्र भवितव्यतायाः ।

इह हि संसारसद्मनि समासादितावतारः स्वभावविमलोऽपि जन्तुरेकस्मिन्नेव जन्मनि दशावशेन दीपाङ्कुर इवानेकानि रूपान्तराण्यनुभवति ।

सुदूरमपि विषण्णेन धीमता तदेव चिन्त्यं वस्तु, यदुपायसाध्यम् ।

अहो विचित्रता कार्यपरिणतेः ।

उद्दामचारिणा सकलजनधनप्राणचौरेण चौरेणेव पृष्ठतः प्रेरिताः कृतान्तहतकेन सर्वतो धावमानाः क्व नाम न पदं कुर्वन्ति विपदः ।

को हि नाम कुलवधूजनः प्राकृतस्यापि पत्युरपगमे गमयति गृहीतजीवनो जन्म ।

एकत्रापि दिवसे यान्यतीतानि, तान्यपि स्मर्तुमखिलान्यशक्यानि

## गद्यचिन्तामणिः ।

इयं हि स्वभावसरलनिजहृदयजनिता सर्वविश्वासिता विश्वानर्थकन्दः ।

क्षमापतयः शैलूषा इव मन्त्रिषु नाटयन्ति विस्रम्भम्, न तु बध्नन्ति मनसा।

सर्वथायमनर्थानुबन्धी परिहृतनिखिलेतरव्यापारः पक्ष्मललोचनायामत्यासङ्गः ।

फलन्ति च सकलभुवनमहनीयतपसामवितथवचसामत्रभवतामृषीणामाशिषः ।

यश्च समुपस्थितायां विपदि विषादस्य परिग्रहः, सोऽयं चण्डातपचकितस्य दावहुतभुजि पातः ।

संसृतौ हि वियोगः संयोगिनां नियोगेन भविता ।

न हि पुराकृतानि पुरुषैः पौरुषेण शक्यन्ते निवारयितुम् ।

न हि चेतयमाना मानिनः परशासनं शिरसा धारयन्तो वहन्ति जीवितम् ।

सकलभुवनाधिपत्योपभोगसुखितमपि दुःखयति हि पारतन्त्र्यम्।

विश्वंभरापतयो ह्यतिशयितविश्वदेवताशक्तयः ।

मनसापि वैपरीत्यं राजनि चिकीर्षतां चिन्तासमसमयभाविनी विपत् ।

पार्थिवविरुद्धमध्वानं सुधियः के नाम वगाहन्ते ।

किंकराः खलु नरा देवतानाम् ।

सोऽयं पाशदर्शनभयपलायितस्य फणिनि पदन्यासः ।

सर्वदा सलिलबुद्बुदसहचरा न सन्ति चिरावस्थायिनः संसारविभ्रमाः ।

तरुतलपुञ्जिताः पर्णराशय इव प्रबलपवनपरिस्पन्देन सुकृतपरिक्षयेण तत्क्षण एव नश्यन्ति संगताः संपदः ।

कथमपि कालं कंचिदवस्थितिभाजोऽप्यायुषः क्षय एव नियतः ।

न हि प्रतिकृतिसव्यपेक्षाः प्रेक्षावतामुपकृतयः ।

शास्त्रावगमस्य प्रयोजनं पुंसां हेयोपादेयपरिज्ञानस्वरूपपुरुषार्थसिद्धिः ।

दुर्लभाः खलु हेयोपादेयपरिज्ञानफलाः शास्त्रावगतीर्निश्चिन्वाना विपश्चितः ।

हितमहितं च नावगच्छत्यतुच्छधियामपि यौवने निर्व्याजमदमधुपानमत्तेव चित्तवृत्तिः ।

खलजनकण्टकखिलीकृताः खलु महीभृतामास्थानमण्डपोद्देशाः ।

स्वदेशगतः शशः कुञ्जरातिशायी ।

प्रायेण प्राणभृतां भागधेयविधेये सत्यपि शुभोदये सहायतां तत्र

प्रतिपद्यत एव प्रयत्नोऽपि ।
किमस्ति मस्तकमणिं फणिपतेरपहर्तुं समर्थो जनः ।
को नाम पञ्चजनः पञ्चाननस्य वदनादामिषमाप्तुमभिलषति ।
दारिद्र्यादपि धनार्जने, तस्मादपि तद्रक्षणे. ततोऽपि तत्परिक्षये परिक्लेशः सहस्रगुणः प्राणिनाम् ।
पाटितानेकभटां करिघटां हरिरेक एव किं न विघटयति ।
कथं तदायरहितं धनमव्ययं स्यात् ।
शश्वदुपभोगे गिरिरपि नश्यति ।
वीतवित्ततायाश्च किमपरमरुंतुदम् ।
असुभृतां हि दारिद्र्यमसुभिर्युक्तं मरणम् ।
रिक्तस्य न वचो जीवति ।
धनोपचये तु लोकद्वयोचितपुरुषार्थोऽप्यप्रार्थित एव स्वयमायाति ।
सर्वंकषविषादादविषह्या विपदपरा का भवेत् ।
धृतिमन्तो हि निजोपान्तगतां पीडामेव पीडयन्तः परपीडामपि विभजेरन् ।
न हि कौबेरककुभि कुमुदबन्धोरुदयानुबन्धः ।
इदं हि संसारिणां सांसारिकप्रसूतिजातेष्वरुंतुदं दुर्जातम्. यदात्मसंभवानामात्माभिवर्द्धितानां च कन्यानामन्येन केनाप्यदृष्टपूर्वेण घटनम्; तस्मादप्यनुरूपवरान्वेषणम्; ततोऽपि सुखासिकाचिन्तनम् ।

प्रतिनियतसामर्थ्या हि पदार्थाः ।

अचिन्त्यानुभावं हि भक्तिव्यम् ।

स्थातव्यं हि निदेशे देशाधिपतेः ।

प्रज्ञापरिबर्हविरहिता हि पराक्रमा न क्रमन्ते क्षेमाय ।

अवितथवचसो हि मुनयः ।

किमिदमाधुनिकमावश्यके कर्मणि सकलकर्मकर्मठानां पुरुषाणां क्वचिदटनम्, पुनर्घटनं च ।

न शाम्यति कर्मोपशमादृते दुर्मोचोऽयं रागरोगः ।

रागान्धो ह्यखिलेन्द्रियेणाप्यदर्शनादन्धादपि महानन्धः ।

विकारहेतौ सति मनश्चेद्विक्रियते, विद्यास्फूर्तिः किमर्थिका ।

क्वचिदस्थानपातिनो जनस्य याथात्म्यमवद्योतयितुं हि विद्याक्लेशः ।

जीवतां जगति किं नाम न श्राव्यं श्रोतव्यम् ।

परिपन्थिजनगृह्याः खलु निगृह्याः पुरन्ध्यः पुमांसश्च ।

उग्रतरव्यसनवार्धिवर्धनेन्दुः खलु वार्द्धकम् ।

को नाम वराको जनः परहितपरैराख्याते वचसि वैमुख्यमुद्वहति ।

को नाम पादपस्कन्धमध्यासीनः परशुना मूर्खस्तन्मूलमुन्मूलयेत् ।

को वा तरिष्यन्वारिधिं वहित्रेण तत्रैव जाल्मश्छिद्राणि जनयेत् ।

को वा पिपासुः पानीयचषकं पापः पांसुपूरैः पूरयेत् ।

कश्च वा धेनोरापीनभारेण क्षीरस्यन्क्षतं क्षुरेण पातकः संपादयेत् ।

गतानुगतिकः खलु लोकः ।

उपार्जितमपि दुष्कृतं सुकृतिसमागमो हि गमयेत् ।

इदं हि जगति लाभमिच्छतो मूलच्छेदः ।

नियोगतश्चेद्भोगानां वियोगः, स्वयं त्यागात्किमिति लोकोऽयं बिभेति ।

यतोऽभ्युदयनिःश्रेयससिद्धिः, स धर्मः ।

अर्थेष्वतिमात्रलोलुपता लोकद्वयेऽप्यात्मनः कृत्स्नव्यसननिदानतया निराकरणीया ।

जगति जातेष्वजातमृतयः के नाम ।

## वासवदत्ता ।

अनिष्टोद्भावनरसोत्तरं हि भवति खलहृदयम् ।

असतां हृदि प्रविष्टो दोषलवः करालायते ।

न च सचेतना विसदृशमुपदिशन्ति ।

अहो दुरतिक्रमा कालगतिः ।

सर्वथा न कश्चिदगोचरो भवितव्यानाम् ।

न सर्वः सर्वं कार्यमेव करोत्यसारे संसारे ।

## कादम्बरी ।

अकारणाविष्कृतवैरदारुणा-
दसज्जनात्कस्य भयं न जायते ।
विषं महाहेरिव यस्य दुर्वचः
सुदुःसहं संनिहितं सदा मुखे ॥ १ ॥
कटु क्वणन्तो मलदायकाः खला-
स्तुदन्त्यलं बन्धनशृङ्खला इव ।
मनस्तु साधुध्वनिभिः पदे पदे
हरन्ति सन्तो मणिनूपुरा इव ॥ २ ॥

## हर्षचरितम् ।

सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयः शरभा इव ॥ १ ॥
अन्यवर्णपरावृत्त्या बन्धचिह्ननिगूहनैः ।
अनाख्यातः सतां मध्ये कविश्चौरो विभाव्यते ॥ २ ॥
रागिणि नलिने लक्ष्मीं दिवसो निदधाति दिनकरप्रभवाम् ।
अनपेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ ३ ॥

साधूनामुपकर्तुं लक्ष्मीं द्रष्टुं विहायसा गन्तुम् ।
न कुतूहलि कस्य मनश्चरितं च महात्मनां श्रोतुम् ॥ ४ ॥
अरुण इव पुरःसरो रविं पवन इवातिजवो जलागमम् ।
शुभमशुभमथापि वा नृणां कथयति पूर्वनिदर्शनोदयः ॥ ५ ॥
नियतिर्विधाय पुंसां प्रथमं सुखमुपरि दारुणं दुःखम् ।
कृत्वालोकं तरला तडिदिव वज्रं निपातयति ॥ ६ ॥
मातापितृसहस्राणि पुत्रदारशतानि च ।
युगे युगे व्यतीतानि कस्य ते कस्य वा भवान् ॥ ७ ॥
विहग कुरु दृढं मनः स्वयं त्यज शुचमास्व विवेकवर्त्मनि ।
सह कमलसरोजिनीश्रिया श्रयति सुमेरुशिरो विरोचनः ॥ ८ ॥
द्वीपोपगीतगुणमपि समुपार्जितरत्नराशिसारमपि ।
पोतं पवन इव विधिः पुरुषमकाण्डे निपातयति ॥ ९ ॥
अङ्गनवेदी वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य वीरस्य ॥ १० ॥
सहसा संपादयता मनोरथप्रार्थितानि वस्तूनि ।
दैवेनापि क्रियते भव्यानां पूर्वसेवेव ॥ ११ ॥
विद्वज्जनसंपर्को नष्टष्टज्ञातिदर्शनाभ्युदयः ।
कस्य न सुखाय भवने भवति महारत्नलाभश्च ॥ १२ ॥



# तिलकमञ्जरी ।

वन्द्यास्ते कवयः काव्यपरमार्थविशारदाः ।
विचारयन्ति ये दोषान्गुणांश्च गतमत्सराः ॥ १ ॥
वार्योऽनार्यः स निर्दोषे यः काव्याध्वनि सर्पताम् ।
अग्रगामितया कुर्वन्विघ्नमायाति सर्पताम् ॥ २ ॥
स्वादुतां मधुना नीताः पैशूनामपि मानसम् ।
मदयन्ति न यद्वाचः किं तेऽपि कवयो भुवि ॥ ३ ॥
काव्यं तदपि किं वाच्यमवाञ्चि न करोति यत् ।
श्रुतमात्रममित्राणां वक्राणि च शिरांसि च ॥ ४ ॥
उत्पतन्त्यजवद्योम केचित्प्राप्तपदत्रयाः ।
विशन्त्यन्ये प्रबन्धेऽपि लब्धे बलिरिव क्षितिम् ॥ ५ ॥
कषाश्मनेव श्यामेन मुखेनाधोमुखेक्षणः ।
काव्यहेम्नो गुणान्वक्ति कलाद इव दुर्जनः ॥ ६ ॥
वर्णयुक्तिं दधानापि स्निग्धाञ्जनमनोहराम् ।
नातिश्लेषघना श्लाघां कृतिर्लिपिरिवाश्नुते ॥ ७ ॥
तव राजहंस हंसीदर्शनमुदितस्य विस्मृतो नूनम् ।
सरसिजवनप्रवेशः समयेऽपि विलम्बसे तेन ॥ ८ ॥
क्षुण्णोऽपि रोहति तरुः क्षीणोऽप्युपचीयते पुनश्चन्द्रः ।
इति विमृशन्तः सन्तः संतप्यन्ते न विधुरेषु ॥ ९ ॥

## गद्यचिन्तामणिः ।

स्नेहप्रयोगमनपेक्ष्य दशां च पात्रं
धुन्वंस्तमांसि सुजनापररत्नदीपः ।
मार्गप्रकाशनकृते यदि नाभविष्य-
त्सन्मार्गगामिजनता खलु नाभविष्यत् ॥ १ ॥
त्यक्तानुवर्तनतिरस्करणौ प्रजानां
श्रेयः परं च कुरुतोऽमृतकालकूटौ ।
तद्वत्सदन्यमनुजावपि हि प्रकृत्या
तस्मादपेक्ष्य किमुपेक्ष्य किमन्यमेति ॥ २ ॥

## वासवदत्ता ।

भवति सुभगत्वमधिकं विस्तारितपरगुणस्य सुजनस्य ।
वहति विकासितकुमुदो द्विगुणरुचिं हिमकरोद्द्योतः ॥ १ ॥
विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी स कुलद्वेषी पुनः पिशुनः ॥ २ ॥
अतिमलिने कर्तव्ये भवति खलानामतीव निपुणा धीः ।
तिमिरे हि कौशिकानां रूपं प्रतिपद्यते दृष्टिः ॥ ३ ॥
हस्त इव भूतिमलिनो यथा यथा लङ्घयति खलः सुजनम् ।

दर्पणमिव तं कुरुते तथा तथा निर्मलच्छायम् ॥ ४ ॥
विध्वस्तपरगुणानां भवति खलानामतीव मलिनत्वम् ।
अन्तरितशशिरुचामपि सलिलमुचां मलिनिमाभ्यधिकः ॥ ५
अविदितगुणापि सत्कविफणितिः कर्णेषु वमति मधुधाराम् ।
अनधिगतपरिमलापि हि हरति दृशं मालतीमाला ॥ ६ ॥
गुणिनामपि निजरूपप्रतिपत्तिः परत एव संभवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ॥ ७ ॥



॥ श्रीः ॥

# ॥ साहित्यरत्नमञ्जूषा ॥



## रघुवंशः।

हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा ॥ १. १० ॥

सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ १. १८ ॥

संततिः शुद्धवंश्या हि परत्रेह च शर्मणे ॥ १. ६९ ॥

प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ॥ १. ७९ ॥

भक्त्योपपन्नेषु हि तद्विधानां
प्रसादचिह्नानि पुरःफलानि ॥ २. २२. ॥

न पादपोन्मूलनशक्ति रंहः
शिलोच्चये मूर्च्छति मारुतस्य ॥ २. ३४ ॥

शस्त्रेण रक्ष्यं यदशक्यरक्षं
न तद्यशः शस्त्रभृतां क्षिणोति ॥ २. ४०. ॥

अल्पस्य हेतोर्बहु हातुमिच्छ-
न्विचारमूढः प्रतिभासि मे त्वम् ॥ २. ४७ ॥

महीतलस्पर्शनमात्रभिन्न-
    मृद्धं हि राज्यं पदमैन्द्रमाहुः ॥ २. ५० ॥
स्थातुं नियोक्तुर्न हि शक्यमग्रे
    विनाश्य रक्ष्यं स्वयमक्षतेन ॥ २. ५६ ॥
संबन्धमाभाषणपूर्वमाहुः ॥ २. ५८ ॥
क्रिया हि वस्तूपहिता प्रसीदति ॥ ३. २९ ॥
पथः श्रुतेर्दर्शयितार ईश्वरा
    मलीमसामाददते न पद्धतिम् ॥ ३. ४६ ॥
पदं हि सर्वत्र गुणैर्निधीयते ॥ ३. ६२ ॥
प्रणिपातप्रतीकारः संरम्भो हि महात्मनाम् ॥ ४. ६४ ॥
आदानं हि विसर्गाय सतां वारिमुचामिव ॥ ४. ८६ ॥
सूर्ये तपत्यावरणाय दृष्टेः
    कल्पेत लोकस्य कथं तमिस्रा ॥ ५. १३ ॥
पर्यायपीतस्य सुरैर्हिमांशोः
    कलाक्षयः श्लाघ्यतरो हि वृद्धेः ॥ ५. १६ ॥
............निर्गलिताम्बुगर्भं
    शरद्घनं नार्दति चातकोऽपि ॥ ५. १७ ॥
उष्णत्वमग्न्यातपसंप्रयोगा-
    च्छैत्यं हि यत्सा प्रकृतिर्जलस्य ॥ ५. ५४ ॥
नक्षत्रताराग्रहसंकुलापि

. ज्योतिष्मती चन्द्रमसैव रात्रिः ॥ ६. २२ ॥

........•........भिन्नरुचिर्हि लोकः ॥•६. ३० ॥

न हि प्रफुल्लं सहकारमेत्य

वृक्षान्तरं काङ्क्षति षट्पदालिः ॥ ६. ६९ ॥

रत्नं समागच्छतु काञ्चनेन ॥ .६. ७९ ॥

मनो हि जन्मान्तरसंगतिज्ञम् ॥ ७. १५ ॥

धूमो निवर्त्येत समीरणेन

यतस्तु कक्षस्तत एव वह्निः ॥ ७. ५५ ॥

पवनाग्निसमागमो ह्ययं

महितं ब्रह्म यदस्त्रतेजसा ॥ ८. ४ ॥

ननु तैलनिषेकबिन्दुना

सह दीपार्चिरुपैति मेदिनीम् ॥ ८. ३८ ॥

प्रतिकारविधानमायुषः

सति शेषे हि फलाय कल्पते ॥ ८. ४० ॥

अभितप्तमयोऽपि मार्दवं

भजते कैव कथा शरीरिषु ॥ ८. ४३ ॥

विषमप्यमृतं क्वचिद्भवे-

दमृतं वा विषमीश्वरेच्छया ॥ ८. ४६ ॥

धिगिमां देहभृतामसारताम् ॥ ८. ५१ ॥

वसुमत्या हि नृपाः कलत्रिणः ॥ ८. ८३ ॥

परलोकजुषां स्वकर्मभि-

गतयो भिन्नपथा हि देहिनाम् ॥ ८. ८५ ॥

स्वजनाश्रु किलातिसंततं

दहति प्रेतमिति प्रचक्षते ॥ ८. ८६ ॥

मरणं प्रकृतिः शरीरिणां

विकृतिर्जीवितमुच्यते बुधैः ।

क्षणमप्यवतिष्ठते श्वस-

न्यदि जन्तुर्ननु लाभवानसौ ॥ ८. ८७ ॥

अवगच्छति मूढचेतनः

प्रियनाशं हृदि शल्यमर्पितम् ।

स्थिरधीस्तु तदेव मन्यते

कुशलद्वारतया समुद्धृतम् ॥ ८. ८८ ॥

स्वशरीरशरीरिणावपि

श्रुतसंयोगविपर्ययौ यदा ।

विरहः किमिवानुतापये-

द्वद बाह्यैर्विषयैर्विपश्चिताम् ॥ ८. ८९ ॥

द्रुमसानुमतां किमन्तरं

यदि वायौ द्वितयेऽपि ते चलाः ॥ ८. ९० ॥

अपथे पदमर्पयन्ति हि

श्रुतवन्तोऽपि रजोनिमीलिताः ॥ ९. ७४ ॥

कृष्यां दहन्नपि खलु क्षितिमिन्धनेद्धो
　　बीजप्ररोहजननीं ज्वलनः करोति ॥ ९. ८० ॥
अव्याक्षेपो भविष्यन्त्याः कार्यसिद्धेर्हि लक्षणम् ॥ १०. ६ ॥
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते ॥ १०. ४० ॥
तेजसां हि न वयः समीक्ष्यते ॥ ११. १ ॥
किं महोरगविसर्पिविक्रमो
　　राजिलेषु गरुडः प्रवर्तते ॥ ११. २७ ॥
मद्य एव सुकृतां हि पच्यते
　　कल्पवृक्षफलधर्मि काङ्क्षितम् ॥ ११. ५० ॥
पावकस्य महिमा स गण्यते
　　कक्षवज्ज्वलति सागरेऽपि यः ॥ ११. ७५ ॥
खातमूलमनिलो नदीरयैः
　　पातयत्यपि मृदुस्तटद्रुमम् ॥ ११. ७६ ॥
केवलोऽपि सुभगो नवाम्बुदः
　　किं पुनस्त्रिदशचापलाञ्छितः ॥ ११. ८० ॥
निर्जितेषु तरसा तरस्विनां
　　शत्रुषु प्रणतिरेव कीर्तये ॥ ११. ८९ ॥
अत्यारूढो हि नारीणामकालज्ञो मनोभवः ॥ १२. ३३ ॥
काले खलु समारब्धाः फलं बध्नन्ति नीतयः ॥ १२. ६९ ॥
अपि स्वदेहात्किमुतेन्द्रियार्था-

यशोधनानां हि यशो गरीयः ॥ १४. ३५ ॥
छाया हि भूमेः शशिनो मलत्वे-
नारोपिता शुद्धिमतः प्रजाभिः ॥ १४. ४० ॥
अमर्षणः शोणितकाङ्क्षया किं
पदा स्पृशन्तं दशति द्विजिह्वः ॥ १४. ४१ ॥
आज्ञा गुरूणां ह्यविचारणीया ॥ १४. ४३ ॥
त्राणाभावे हि शापास्त्राः कुर्वन्ति तपसो व्ययम् ॥ १५. ३ ॥
धर्मसंरक्षणार्थैव प्रवृत्तिर्भुवि शार्ङ्गिणः ॥ १५. १४ ॥
......संमुखीनो हि जयो रन्ध्रप्रहारिणाम् ॥ १५. १७ ॥
प्रह्वेष्वनिर्बन्धरुषो हि सन्तः ॥ १६. ८० ॥
वयोरूपविभूतीनामेकैकं मदकारणम् ॥ १७. ४३ ॥
न हि सिंहो गजास्कन्दी भयाद्गिरिगुहाशयः ॥ १७. ५२ ॥
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ १७. ६० ॥
सकृद्विविग्नानपि हि प्रयुक्तं
माधुर्यमीष्टे हरिणान्ग्रहीतुम् ॥ १८. १३ ॥
....................सुखोपरोधि
वृत्तं हि राज्ञामुपरुद्धवृत्तम् ॥ १८. १८ ॥
स्वादुभिस्तु विषयैर्हृतस्ततो
दुःखमिन्द्रियगणो निवार्यते ॥ १९. ४९.

# कुमारसंभवः ।

एको हि दोषो गुणसंनिपाते

निमज्जतीन्दोः किरणेष्विवाङ्कः ॥ १. ३ ॥

क्षुद्रेऽपि नूनं शरणं प्रपन्ने

ममत्वमुच्चैःशिरसां सतीव ॥ १. १२ ॥

अभ्यर्थनाभङ्गभयेन साधु-

र्माध्यस्थ्यमिष्टेऽप्यवलम्बतेऽर्थे ॥ १. ५२ ॥

विकारहेतौ सति विक्रियन्ते

येषां न चेतांसि त एव धीराः ॥ १. ५९ ॥

शाम्येत्प्रत्यपकारेण नोपकारेण दुर्जनः ॥ २. ४० ॥

प्रयोजनापेक्षितया प्रभूणां

प्रायश्चलं गौरवमाश्रितेषु ॥ ३. १ ॥

अप्यप्रसिद्धं यशसे हि पुंसा-

मनन्यसाधारणमेव कर्म ॥ ३. १९ ॥

प्रायेण सामग्र्यविधौ गुणानां

पराङ्मुखी विश्वसृजः प्रवृत्तिः ॥ ३. २८ ॥

आत्मेश्वराणां न हि जातु विघ्नाः

समाधिभङ्गप्रभवो भवन्ति ॥ ३. ४० ॥

न हीश्वरव्याहृतयः कदाचि-

त्पुष्णन्ति लोके विपरीतमर्थम् ।। ३. ६३ ।।

................काठिनाः खलु स्त्रियः ।। ४. ५ ।।

स्वजनस्य हि दुःखमग्रतो

विवृतद्वारमिवोपजायते ।। ४. २६ ।।

दयितास्वनवस्थितं नृणां

न खलु प्रेम चलं सुहृज्जने ।। ४. २८ ।।

अशनेरमृतस्य चोभयो-

र्वशिनश्चाम्बुधराश्च योनयः ।। ४. ४३ ।।

प्रियेषु सौभाग्यफला हि चारुता ।। ५. १ ।।

पदं सहेत भ्रमरस्य पेशलं

शिरीषपुष्पं न: पुनः पतत्रिणः ।। ५. ४ ।।

क ईप्सितार्थस्थिरनिश्चयं मनः

पयश्च निम्नाभिमुखं प्रतीपयेत् ।। ५. ५ ।।

न षट्पदश्रेणिभिरेव पङ्कजं

सशैवलासङ्गमपि प्रकाशते ।। ५. ९ ।।

न धर्मवृद्धेषु वयः समीक्ष्यते ।। ५. १६ ।।

भवन्ति साम्येऽपि निविष्टचेतसां

वपुर्विशेषेष्वतिगौरवाः क्रियाः ।। ५. ३१ ।।

शरीरमाद्यं खलु धर्मसाधनम् ।। ५. ३३ ।।

....................कः करं

'प्रसारयेत्पन्नगरत्नसूचये ॥ ५. ४३ ॥

न रत्नमन्विष्यति मृग्यते हि तत् ॥ ५. ४५ ॥

मनोरथानामगतिर्न विद्यते ॥ ५. ६४ ॥

अपेक्ष्यते साधुजनेन वैदिकी

श्मशानशूलस्य न यूपसत्क्रिया ॥ ५. ७३ ॥

अलोकसामान्यमचिन्त्यहेतुकं

द्विषन्ति मन्दाश्चरितं महात्मनाम् ॥ ५. ७५ ॥

न कामवृत्तिर्वचनीयमीक्षते ॥ ५. ८२ ॥

न केवलं यो महतोऽपभाषते

शृणोति तस्मादपि यः स पापभाक् ॥ ५. ८३ ॥

क्लेशः फलेन हि पुनर्नवतां विधत्ते ॥ ५. ८६ ॥

स्त्री पुमानित्यनास्थैषा वृत्तं हि महितं सताम् ॥ ६. १२ ॥

क्रियाणां खलु धर्म्याणां सत्पत्न्यो मूलकारणम् ॥ ६. १३ ॥

प्रायः प्रत्ययमाधत्ते स्वगुणेषूत्तमादरः ॥ ६. २० ॥

विक्रियायै न कल्पन्ते संबन्धाः सदनुष्ठिताः ॥ ६. २९ ॥

यदध्यासितमर्हद्भिस्तद्धि तीर्थं प्रचक्षते ॥ ६. ५६ ॥

विनियोगप्रसादा हि किंकराः प्रभविष्णुषु ॥ ६. ६२ ॥

अशोच्या हि पितुः कन्या सद्भर्तृप्रतिपादिता ॥ ६. ७९ ॥

प्रायेण गृहिणीनेत्राः कन्यार्थेषु कुटुम्बिनः ॥ ६. ८५ ॥

भवन्त्यव्यभिचारिण्यो भर्तुरिष्टे पतिव्रताः ॥ ६. ८६ ॥

स्त्रीणां प्रियालोकफलो हि वेषः ॥ ७. २२ ॥

कालप्रयुक्ता खलु कार्यविद्भि-

विज्ञापना भर्तृषु सिद्धिमेति ॥ ७. ९३ ॥

भर्तृवल्लभतया हि मानसीं

मातुरस्यति शुचं वधूजनः ॥ ८. १२ ॥

धिङ्महत्त्वमसतां हतान्तरम् ॥ ८. ५७ ॥

विक्रिया न खलु कालदोषजा

निर्मलप्रकृतिषु स्थिरोदया ॥ ८. ६५ ॥

नूनमात्मसदृशी प्रकल्पिता

वेधसैव गुणदोषयोर्गतिः ॥ ८. ६६ ॥

पराभिभूता वद किं क्षमन्ते

कालातिपातं शरणार्थिनोऽमी ॥ ९. १० ॥

................परितोषयन्ति

गीर्भिर्गिरीशं रुचिराभिरीशम् ॥ ९. १२ ॥

स्तोत्रं कस्य न तुष्टये ॥ १०. ९ ॥

कार्येष्ववश्यकार्येषु सिद्धये क्षिप्रकारिता ॥ १०. २५ ॥

विपदा परिभूताः किं व्यवस्यन्ति विलम्बितुम् ॥ १०. ३५

पुत्रोत्सवे माद्यति का न हर्षात् ॥ ११. १७ ॥

स्वनन्दनालोकनमङ्गलेषु

क्षणं क्षणं तृप्यति कस्य चेतः ॥ ११. २० ॥

ुदे न हृद्या किमु बालकेलिः ॥ ११. ४० ॥

....................कस्य

मनो न हि क्षुभ्यति धामधाम्नि ॥ १२. २२ ॥

प्रभुप्रसादो हि मुदे न कस्य ॥ १२. ३२ ॥

दावानलप्लोषविपत्तिमन्यों

महाम्बुदात्किं हरते वनानाम् ॥ १२. ४१ ॥

भवन्ति वाचोऽवसरे प्रयुक्ता

ध्रुवं फलाविष्टमहोदयाय ॥ १२. ४३ ॥

................सुतविक्रमे

सति न नन्दति का खलु वीरसूः ॥ १२. ५९ ॥

ध्रुवमभिमते पूर्णे को वा मुदा न हि माद्यति ॥ १२. ६० ॥

...................महतां वृथा भवे-

दसद्ग्रहान्धस्य हितोपदेशनम् ॥ १५ २६. ॥

न कस्य वीर्याय वरस्य संगतिः ॥ १५. ५१ ॥

## किरातार्जुनीयम् ।

..............न हि प्रियं

प्रवक्तुमिच्छन्ति मृषा हितैषिणः ॥ १. २ ॥

क्रियासु युक्तैर्नृप चारचक्षुषो
न वञ्चनीयाः प्रभवोऽनुजीविभिः ॥ १. ४ ॥
हितं मनोहारि च दुर्लभं वचः ॥ १. ४ ॥
स किंसखा साधु न शास्ति योऽधिपं
हितान्नयः संशृणुते स किंप्रभुः ।
मदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसंपदः ॥ १. ५ ॥
समुन्नयन्भूतिमनार्यसंगमा-
द्वरं विरोधोऽपि समं महात्मभिः ॥ १. ८ ॥
व्रजन्ति ते मूढधियः पराभवं
भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा-
नसंवृताङ्गान्निशिता इवेषवः ॥ १. ३० ॥
अवन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः ।
अमर्षशून्येन जनस्य जन्तुना
न जातहार्देन न विद्विषादरः ॥ १. ३३ ॥
विचित्ररूपाः खलु चित्तवृत्तयः ॥ १. ३७ ॥
परैरपर्यासितवीर्यसंपदां
पराभवोऽप्युत्सव एव मानिनाम् ॥ १. ४१ ॥

व्रजन्ति शत्रूनवधूय निःस्पृहाः
    शमेन सिद्धिं मुनयो न भूभृतः ॥ १. ४२ ॥
अरिषु हि विजयार्थिनः क्षितीशा
    विदधति सोपधि संधिदूषणानि ॥ १. ४५ ॥
विषमोऽपि विगाह्यते नयः
    कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः
    सदुपन्यस्यति कृत्यवर्त्म यः ॥ २. ३ ॥
ननु वक्तृविशेषनिःस्पृहा
    गुणगृह्या वचने विपश्चितः ॥ २. ५ ॥
द्विषतामुदयः सुमेधसा
    गुरुरस्वन्ततरः सुमर्षणः ।
न महानपि भूतिमिच्छता
    फलसंपत्प्रवणः परिक्षयः ॥ २. ८ ॥
अभिमानवतो मनस्विनः
    प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं
    मतमालम्बनमात्मपौरुषम् ॥ २. १३ ॥
विपदोऽभिभवन्त्यविक्रमं
    रहयत्यापदुपेतमायतिः ।

नियता लघुता निरायते-

रगरीयान्न पदं नृपश्रियः ॥ २. १४ ॥

निवसन्ति पराक्रमाश्रया

न विषादेन समं समृद्धयः ॥ २. १५ ॥

मदसिक्तमुखैर्मृगाधिपः

करिभिर्वर्तयते स्वयं हतैः ।

लघयन्खलु तेजसा जग-

न्न महानिच्छति भूतिमन्यतः ॥ २. १८ ॥

अभिमानधनस्य गत्वरै-

रसुभिः स्थास्नु यशश्चिचीषतः ।

अचिरांशुविलासचञ्चला

ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ २. १९ ॥

प्रकृतिः खलु सा महीयसः

सहते नान्यसमुन्नतिं यया ॥ २. २१ ॥

सहसा विदधीत न क्रिया-

मविवेकः परमापदां पदम् ।

वृणते हि विमृश्यकारिणं

गुणलुब्धाः स्वयमेव संपदः ॥ २. ३० ॥

शुचि भूषयति श्रुतं वपुः

प्रशमस्तस्य भवत्यलंक्रिया ।

प्रशमाभरणं पराक्रमः

स नयापादितसिद्धिभूषणः ॥ २. ३२ ॥

स्पृहणीयगुणैर्महात्मभि-

श्चरिते वर्त्मनि यच्छतां मनः ।

विधिहेतुरहेतुरागसां

विनिपातोऽपि समः समुन्नतेः ॥ २. ३४ ॥

अपनेयमुदेतुमिच्छता

तिमिरं रोषमयं धिया पुरः ॥ २. ३६ ॥

उपकारकमायतेर्भृशं

प्रसवः कर्मफलस्य भूरिणः ।

अनपायि निबर्हणं द्विषां

न तितिक्षासममस्ति साधनम् ॥ २. ४३ ॥

वीतस्पृहाणामपि मुक्तिभाजां

भवन्ति भव्येषु हि पक्षपाताः ॥ ३. १२ ॥

असाधुयोगा हि जयान्तरायाः

प्रमाथिनीनां विपदां पदानि ॥ ३. १४ ॥

प्रकर्षतन्त्रा हि रणे जयश्रीः ॥ ३. १७ ॥

विश्वासयत्याशु सतां हि योगः ॥ ३. ३१ ॥

यशोऽधिगन्तुं सुखलिप्सया वा

मनुष्यसंख्यामतिवर्तितुं वा ।

निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः ॥ ३. ४० ॥
स क्षत्रियस्त्राणसहः सतां यः ॥ ३. ४८ ॥
करोति यः सर्वजनातिरिक्तां
संभावनामर्थवतीं क्रियाभिः ।
संसत्सु जाते पुरुषाधिकारे
न पूरणी तं समुपैति संख्या ॥ ३. ५१ ॥
मात्सर्यरागोपहतात्मनां हि
स्खलन्ति साधुष्वपि मानसानि ॥ ३. ५३ ॥
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसंगमे ॥ ४. ४ ॥
न हीङ्गितज्ञोऽवसरेऽवसीदति ॥ ४. २० ॥
गुणाः प्रियत्वेऽधिकृता न संस्तवः ॥ ४. २५ ॥
प्रायेण सत्यपि हितार्थकरे विधौ हि
श्रेयांसि लब्धुमसुखानि विनान्तरायैः ॥ ५. ४९ ॥
संधत्ते भृशमरतिं हि सद्वियोगः ॥ ५. ५१ ॥
महते रुजन्नपि गुणाय महान् ॥ ६. ७ ॥
किमिवावसादकरमात्मवताम् ॥ ६. १९ ॥
कमिवेशते रमयितुं न गुणाः ॥ ६. २४ ॥
न निहन्ति धैर्यमनुभावगुणः ॥ ६. २८ ॥

नखवर्त्मगाः प्रभवतां हि धियः ॥ ६. ३८ ॥

स्वयशांसि विक्रमवतामवतां

न वधूष्वघानि विमृशन्ति धियः ॥ ६. ४५ ॥

संभावना ह्यधिकृतस्य तनोति तेजः ॥ ६. ४६ ॥

रम्याणां विकृतिरपि श्रियं तनोति ॥ ७. ५ ॥

कल्याणी विधिषु विचित्रता विधातुः ॥ ७. ७ ॥

युक्तानां खलु महतां परोपकारे

कल्याणी भवति रुजत्स्वपि प्रवृत्तिः ॥ ७. १३ ॥

नाल्पीयान्बहु सुकृतं हिनस्ति दोषः ॥ ७. १५ ॥

संसक्तौ किमसुलभं महोदयाना-

मुच्छ्रायं नयति यदृच्छयापि योगः ॥ ७. २७ ॥

सा लक्ष्मीरुपकुरुते यया परेषाम् ॥ ७. २८ ॥

यथोत्तरेच्छा हि गुणेषु कामिनः ॥ ८. ४ ॥

वसन्ति हि प्रेम्णि गुणा न वस्तुनि ॥ ८. ३७ ॥

अकृत्रिमप्रेमरसाहितैर्मनो

हरन्ति रामाः कृतकैरपीहितैः ॥ ८. ४६ ॥

जनस्य रूढप्रणयस्य चेतसः

किमप्यमर्षोऽनुनये भृशायते ॥ ८. ५४ ॥

लङ्घ्यते न खलु कालनियोगः ॥ ९. १३ ॥

वस्तुमिच्छति निरापदि सर्वः ॥ ९ १६ ॥

दुःखिते मनसि सर्वमसह्यम् ॥ ९. ३० ॥

ओजसापि खलु नूनमनूनं

नासहायमुपयाति जयश्रीः ॥ ९. ३३ ॥

साधनेषु हि रतेरुपधत्ते

रम्यतां प्रियसमागम एव ॥ ९. ३५ ॥

प्राप्यते गुणवतापि गुणानां

व्यक्तमाश्रयवशेन विशेषः ॥ ९. ५८ ॥

आत्मवर्गहितमिच्छति सर्वः ॥ ९. ६४ ॥

कारयत्यनिभृता गुणदोषे

वारुणी खलु रहस्यविभेदम् ॥ ९. ६८ ॥

प्रेम पश्यति भयान्यपदेऽपि ॥ ९. ७० ॥

उपहितपरमप्रभावधाम्नां

न हि जयिनां तपसामलङ्घ्यमस्ति ॥ १०. ६ ॥

परिजनतापि गुणाय सद्गुणानाम् ॥ १०. ९ ॥

हरति मनो मधुरा हि यौवनश्रीः ॥ १०. १७ ॥

न हि महतां सुकरः समाधिभङ्गः ॥ १०. २३ ॥

गुणमहतां महते गुणाय योगः ॥ १०. २५ ॥

चलति नयान्न जिगीषितां हि चेतः ॥ १०. २९ ॥

प्रभवति न तदा परो विजेतुं

भवति जितेन्द्रियता यदात्मरक्षा ॥ १०. ३५ ॥

बलवदपि बलं मिथो विरोधि
  प्रभवति नैव विपक्षनिर्जयाय ॥ १०. ३७ ॥
दुरधिगमा हि गतिः प्रयोजनानाम् ॥ १०. ४० ॥
कथयति संवृतिरेव कामितानि ॥ १०. ४४ ॥
.........अनुरागी
  युवतिजनः खलु नाप्यतेऽनुरूपः ॥ १०. ५० ॥
ननु करुणामृदु मानसं मुनीनाम् ॥ १०. ५१ ॥
उपनतमवधीरयन्त्यभव्याः ॥ १०. ५१ ॥
प्रभवति मण्डयितु वधूरनङ्गः ॥ १०. ५९ ॥
ज्वलयति महतां मनांस्यमर्षे
  न हि लभतेऽवसरं सुखाभिलाष. ॥ १०. ६२ ॥
अविज्ञातेऽपि बन्धौ हि बलात्प्रह्लादते मनः ॥ ११. ८ ॥
सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् ॥ ११. ११ ॥
शरदम्बुधरच्छायागत्वर्यो यौवनश्रिय ।
आपातरम्या विषयाः पर्यन्तपरितापिन. ॥ ११. १२ ॥
अन्तकः पर्यवस्थाता जन्मिनः संततापदः ।
इति त्याज्ये भवे भव्यो मुक्तावुत्तिष्ठते जनः ॥ ११. १३ ॥
मूलं दोषस्य हिंसादेरर्थकामौ स्म मा पुषः ।
तौ हि तत्त्वावबोधस्य दुरुच्छेदावुपप्लवौ ॥ ११. २० ॥
नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।

आसक्तास्ताम्वर्मा मूढा वामशीला हि जन्तवः ॥ ११.२४॥
तदा रम्याण्यरम्याणि प्रियाः शल्यं तदासवः ।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ ११. २८ ॥
न्यायाधारा हि साधवः ॥ ११. ३० ॥
श्रद्धेया विप्रलब्धारः प्रिया विप्रियकारिणः ।
सुदुस्त्यजास्त्यजन्तोऽपि कामाः कष्टा हि शत्रवः ॥११.३५॥
अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि ।
व्रजत्यफलतामेव नयद्रुह इवेहितम् ॥ ११. ४३ ॥
सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता ॥ ११. ५३ ॥
स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ११. ५४॥
असन्मैत्री हि दोषाय कूलच्छायेव सेविता ॥ ११. ५५ ।
अपवादादभीतस्य समस्य गुणदोषयोः ।
असद्वृत्तेरहो वृत्तं दुर्विभावं विधेरिव ॥ ११. ५६ ॥
शक्तिवैकल्यनम्रस्य निःसारत्वाल्लघीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ ११. ५९ ।
तावदाश्रीयते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ११. ६१ ॥
असमानमिवौजांसि सदसा गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ॥ ११. ७३

महतां हि धैर्यमविभाव्यवैभवम् ॥ १२. ३ ॥
अमृतायते हि सुतपः सुकर्मणाम् ॥ १२. ४ ॥
किमिवास्ति यन्न सुकरं मनस्विभिः ॥ १२. ६ ॥
गुरुतां नयन्ति हि गुणा न संहतिः ॥ १२. १० ॥
घ्नन्ति सहजमपि भूरिभियः
समम् आगताः सपदि वैरमापदः ॥ १२. ४६ ॥
विमलं कलुषीभवच्च चेतः
कथयत्येव हितैषिणं रिपुं वा ॥ १३. ६ ॥
परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥ १३. ७ ॥
परमं लाभमरातिभङ्गमाहुः ॥ १३. १२ ॥
ईप्सितस्य न भवेदुपाश्रयः
कस्य निर्जितरजस्तमोगुणः ॥ १३. ४० ॥
स्मर्यते तनुभृतां सनातनं
न्याय्यमाचरणमुत्तमैर्नृभिः ॥ १३. ४२ ॥
आकुमारमुपदेष्टुमिच्छवः
संनिवृत्तिमपथान्महापदः ।
योगशक्तिजितजन्ममृत्यवः
शीलयन्ति मुनयः सुशीलताम् ॥ १३. ४३ ॥

तिष्ठतां तपसि पुण्यमासज-
न्संपदोऽनुगुणयन्सुखैषिणाम् ।
योगिनां परिणमन्विमुक्तये
केन नास्तु विनयः सतां प्रियः ॥ १३. ४४ ॥

सावलेपमुपलिप्सिते परै-
रभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु न महान्समीहते
जीवितं किमु धनं धनायितुम् ॥ १३. ५६ ॥

संवृणोति खलु दोषमज्ञता ॥ १३. ६३ ॥

आपदेत्युभयलोकदूषणी
वर्तमानमपथे हि दुर्मतिम् ॥ १३. ६४ ॥

आत्मनीनमुपतिष्ठते गुणाः
संभवन्ति विरमन्ति चापदः ।
इत्यनेकफलभाजि मास्म भू-
दर्थिता कथमिवार्यसंगमे ॥ १३. ६९ ॥

विविक्तवर्णाभरणा सुखश्रुतिः
प्रसादयन्ती हृदयान्यपि द्विषाम् ।
प्रवर्तते नाकृतपुण्यकर्मणां
प्रसन्नगम्भीरपदा सरस्वती ॥ १४. ३ ॥

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये ।
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित्प्रकाशताम् ॥ १४. ४ ॥
स्तुवन्ति गुर्वीमभिधेयसंपदं
विशुद्धिमुक्तेरपरे विपश्चितः ।
इति स्थितायां प्रतिपूरुषं रुचौ
सुदुर्लभा सर्वमनोरमा गिरः ॥ १४. ५. ॥
हिते नियोज्यः खलु भूतिमिच्छता
महार्थनाशेन नृपोऽनुजीविना ॥ १४. ८. ॥
दिशत्यपायं हि सतामतिक्रमः ॥ १४. ९. ॥
अयातपूर्वा परिवादगोचरं
मता हि वाणी गुणमेव भाषते ॥ १४. ११ ॥
गुणापवादेन तदन्यरोपणा-
द्भृशाधिरूढस्य समञ्जसं जनम् ।
द्विधेव कृत्वा हृदयं निगूहतः
स्फुरन्नसाधोर्विवृणोति वागसिः ॥ १४. १२ ॥
व्रताभिरक्षा हि सतामलंक्रिया ॥ १४. १४ ॥
कथं प्रसह्याहरणैषिणां प्रियाः
परावनत्या मलिनीकृताः श्रियः ॥ १४. १८ ॥

विजानतोऽपि ह्यनयस्य रौद्रतां
भवत्यपाये परिमोहिनी मतिः ॥ १४. १९ ॥

न दूषितः शक्तिमतां स्वयंग्रहः ॥ १४. २० ॥

गुणार्जनोच्छ्रायविरुद्धबुद्धयः
प्रकृत्यमित्रा हि सतामसाधवः ॥ १४. २१ ॥

महापकृष्टैर्महतां न संगतं
भवन्ति गोमायुसखा न दन्तिनः ॥ १४. २२ ॥

परोऽवजानाति यदज्ञताजड-
स्तदुन्नतानां न विहन्ति धीरताम् ।
समानवीर्यान्वयपौरुषेषु यः
करोत्यतिक्रान्तिमसौ तिरस्क्रिया ॥ १४. २३ ॥

यदा विगृह्णाति तदा हतं यशः
करोति मैत्रीमथ दूषिता गुणाः ।
स्थितिं समीक्ष्योभयथा परीक्षकः
करोत्यवज्ञोपहतं पृथक्जनम् ॥ १४. २४ ॥

महोदयानामपि संघवृत्तितां
सहायसाध्याः प्रदिशन्ति सिद्धयः ॥ १४. ४४ ॥

अरुंतुदत्वं महतां ह्यगोचरः ॥ १४. ५५ ॥

मुह्यत्येव हि कृच्छ्रेषु संभ्रमज्वलितं मनः ॥ १५. २ ॥

आस्थामालम्ब्य नीतेषु वशं क्षुद्रेष्वरातिषु ।
व्यक्तिमायाति महतां माहात्म्यमनुकम्पया ॥ १५. ४ ॥
नातिपीडयितुं भग्नानिच्छन्ति हि महौजसः ॥ १५. ६ ॥
वरं कृतध्वस्तगुणादत्यन्तमगुणः पुमान् ।
प्रकृत्या ह्यमणिः श्रेयान्नालंकारश्च्युतोपलः ॥ १५. १५ ॥
प्रच्छन्नमप्यूहयते हि चेष्टा ॥ १६. १९ ॥
अल्पीयसोऽप्यामयतुल्यवृत्ते-
महापकाराय रिपोर्विवृद्धिः ॥ १६. २४ ॥
उपेत्यनन्तद्युतिरप्यसंशयं
विभिन्नमूलोऽनुदयाय संक्षयम् ॥ १६. ६१ ॥
दुर्लक्षचिह्ना महतां हि वृत्तिः ॥ १७. २३ ॥
स्वामापदं प्रोज्झ्य विपत्तिमग्नं
शोचन्ति सन्तो ह्युपकारिपक्षम् ॥ १७. ४० ॥
संभावनायां विफलीकृतायां
पत्युः पुरः साहसमासितव्यम् ॥ १७. ४२ ॥
क इव नाम बृहन्मनसां भवे-
दनुकृतावपि सत्त्ववतां क्षमः ॥ १८. ३ ॥
गुणसंहतेः समतिरिक्तमहो
निजमेव सत्त्वमुपकारि सताम् ॥ १८. १४ ॥

# माघः ।

गृहानुपैतुं प्रणयादभीप्सवो
  भवन्ति नापुण्यकृतां मनीषिणः ॥ १. १४ ॥

ग्रहीतुमार्यान्परिचर्यया मुहु-
र्महानुभावा हि नितान्तमर्थिन ॥ १. १७ ॥

...........श्रेयसि केन तृप्यते ॥ १. २९ ॥

ऋते रवेः क्षालयितुं क्षमेत कः
  क्षपातमस्काण्डमलीमसं नभः ॥ १. ३८ ॥

सदाभिमानैकधना हि मानिनः ॥ १. ६७. ॥

सतीव योषित्प्रकृतिः सुनिश्चला
  पुमांसमभ्येति भवान्तरेष्वपि ॥ १. ७२ ॥

निपातनीया हि सतामसाधवः ॥ १. ७३ ॥

उत्तिष्ठमानस्तु परो नोपेक्ष्यः पथ्यमिच्छता ।
समौ हि शिष्टैराम्नातौ वर्त्स्यन्तावामयः स च ॥ २. १० ॥

ज्ञातसारोऽपि खल्वेकः संदिग्धे कार्यवस्तुनि ॥ २. १२ ॥

.. .. . .. ..महीयांसः प्रकृत्या मितभाषिणः ॥ २. १३ ॥

क्रिया केवलमुत्तरम्॥ २. २२॥

इन्धनौघधगप्यग्निस्त्विषा नात्येति पूषणम् ॥ २. २३॥

विरोधिवचसो मूकान्वागीशानपि कुर्वते ।
जडानप्यनुलोमार्थान्प्रवाचः कृतिनां गिरः ॥ २. २५ ॥

अनिर्लोडितकार्यस्य वाग्जालं वाग्मिनो वृथा ॥ २. २७ ॥

संपदा सुस्थिरंमन्यो भवति स्वल्पयापि यः ।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम् ॥ २. ३० ॥

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा ॥ २. ३४ ॥

ध्रियते यावदेकोऽपि रिपुस्तावत्कुतः सुखम् ॥ २. ३५ ॥

उपकर्त्रारिणा संधिर्न मित्रेणापकारिणा ।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः ॥ २. ३७ ॥

बद्धमूलस्य मूलं हि महद्वैरतरोः स्त्रियः ॥ २. ३८ ॥

कथापि खलु पापानामलमश्रेयसे यतः ॥ २. ४० ॥

अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम् ।
कथंकारमनालम्ब्या कीर्तिर्द्यामधिरोहति ॥ २. ५२ ॥

चतुर्थोपायसाध्ये तु रिपौ सान्त्वमपक्रिया ॥ २. ५४ ॥

सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ २. ६२ ॥

सर्वः स्वार्थं समीहते ॥ २. ६५ ॥

उपायमास्थितस्यापि नश्यन्त्यर्थाः प्रमाद्यतः ॥ २. ८० ॥

बृहत्सहायः कार्यान्तं क्षोदीयानपि गच्छति ॥ २. १०० ॥

महात्मानोऽनुगृह्णन्ति भजमानान्रिपूनपि ॥ २. १०४ ॥

अनेकशः संस्तुतमप्यनल्पा
　　नवं नवं प्रीतिरहो करोति ॥ ३. ३१ ॥
क्षणे क्षणे यन्नवतामुपैति
　　तदेव रूपं रमणीयतायाः ॥ ४. १७ ॥
सर्वः प्रियः खलु भवत्यनुरूपचेष्टः ॥ ५. ६ ॥
सर्वो हि नोपगतमप्यपचीयमानं
वर्धिष्णुमाश्रयमनागतमप्युपैति ॥ ५. १४ ॥
संघर्षिणा सह गुणाभ्यधिकैर्दुरासम् ॥ ५. १९ ॥
आक्रान्तितो न वशमेति महान्परस्य ॥ ५. ४१ ॥
नान्यस्य गन्धमपि मानभृतः सहन्ते ॥ ५. ४२ ॥
नैवात्मनीनमथवा क्रियते मदान्धैः ॥ ५. ४४ ॥
शास्त्रं हि निश्चितधियां क्व न सिद्धिमेति ॥ ५. ४७. ॥
मन्दोऽपि नाम न महानवगृह्य साध्यः ॥ ५. ४९ ॥
समय एव करोति बलाबलम् ॥ ६. ४४ ॥
परिभवोऽरिभवो हि सुदुःसहः ॥ ६. ४५ ॥
उपचितेषु परेष्वसमर्थतां
व्रजति कालवशाद्बलवानपि ॥ ६. ६२ ॥
भवति महत्सु न निष्फलः प्रयासः ॥ ७. १ ॥
स्फुटमभिभूषयति स्त्रियस्त्रपैव ॥ ७. ३८. ॥
भवति हि विक्लवता गुणोऽङ्गनानाम् ॥ ७. ४३ ॥

किमिव न शक्तिहरं ससाध्वसानाम् ॥ ७. ५२. ॥
न परिचयो मलिनात्मनां प्रधानम् ॥ ७. ६१ ॥
बुद्ध्वा वा जितमपरेण काममावि-
ष्कुर्वीत स्वगुणमपत्रपः क एव ॥ ८. ७ ॥
औचित्यं गणयति को विशेषकामः ॥ ८. १० ॥
प्रादुःष्यात्क इव जितः पुरः परेण ॥ ८. १२ ॥
उद्धृत्तः क इव सुखावहः परेषाम् ॥ ८. १८ ॥
...विपदि न दूषितातिभूमिः ॥ ८. २० ॥
युक्तानां विमलतया तिरस्क्रियायै
नाक्रामन्नपि हि भवत्यलं जडौघः ॥ ८. २८ ॥
कस्मिन्वा सजडगुणे गिरां पटुत्वम् ॥ ८. ४५ ॥
शोभायै विपदि सदाश्रिता भवन्ति ॥ ८. ५५ ॥
चक्षुष्यः खलु महतां परैरलङ्घ्यः ॥ ८. ५७ ॥
................अवधीरिताना-
मप्युच्चैर्भवति लघीयसां हि धाष्टर्यम् ॥ ८ ६० ॥
नैवाहो विरमति कौतुकं प्रियेभ्यः ॥ ८. ६९ ॥
.अस्तमयेऽपि सता-
मुचितं खलूच्चतरमेव पदम् ॥ ९. ५ ॥
प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।

अवलम्बनाय दिनभर्तुरभू-

न पतिष्यतः करसहस्रमपि ॥ ९. ६ ॥

अपदोषतैव विगुणस्य गुणः ॥ ९. १२ ॥

चपलाजनं प्रति न चोद्यमदः ॥ ९. १६ ॥

..................लघवः .

प्रकटीभवन्ति मलिनाश्रयतः ॥ ९. २३ ॥

दधति ध्रुवं क्रमश एव न तु

द्युतिशालिनोऽपि सहसोपचयम् ॥ ९. २९ ॥

................अहो महता-

मितरेतरोपकृतिमच्चरितम् ॥ ९. ३३ ॥

समये हि सर्वमुपकारि कृतम् ॥ ९. ४३ ॥

भजते विदेशमधिकेन जित-

स्तदनुप्रवेशमथवा कुशलः ॥ ९. ४८ ॥

किमु चोदिताः प्रियहितार्थकृतः

कृतिनो भवन्ति सुहृदः सुहृदाम् ॥ ९. ५७ ॥

सुहृदर्थमीहितमजिह्मधियां

प्रकृतेर्विराजति विरुद्धमपि ॥ ९ ६२ ॥

विदितेङ्गिते हि पुर एव जने

सपदीरिताः खलु लगन्ति गिरः ॥ ९. ६९ ॥

भ्रान्तिभाजि भवति क विवेकः ॥ १०. ५ ॥

स्वां मदात्प्रकृतिमेति हि सर्वः ॥ १०. १८ ॥

दुस्त्यजः खलु सुखादपि मानः ॥ १०. २१ ॥

न क्षमं भवति तत्त्वविचारे
मत्सरेण हतसंवृति चेतः ॥ १०. ३५ ॥

आनुकूलिकतया हि नराणा-
माक्षिपन्ति हृदयानि तरुण्यः ॥ १०. ७९ ॥

परपरिभवि तेजस्तन्वतामाशु कर्तुं
प्रभवति हि विपक्षोच्छेदमग्रेसरोऽपि ॥ ११. २५ ॥

................कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन ॥ ११. ३३ ॥

करुणमपि समर्थं मानिनां मानभेदे
रुदितमुदितमस्त्रं योषितां विग्रहेषु ॥ १०. ३५ ॥

निरसितुमरिमिच्छोर्ये तदीयाश्रयेण
श्रियमधिगतवन्तस्तेऽपि हन्तव्यपक्षे ॥ ११. ५७ ॥

कुमुदवनमपश्रि श्रीमदम्भोजखण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयमहिमरश्मिर्याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ ११. ६४ ॥

दाक्ष्यं हि सद्यः फलदम्....... ॥ १२. ३२ ॥

मदमूढबुद्धिषु विवेकिता कुतः ॥ १३. ६ ॥

महतां हि सर्वमथवा जनातिगम् ॥ १३. १७ ॥

महतीमपि श्रियमवाप्य विस्मयः
   सुजनो न विस्मरति जातु किंचन ॥ १३. ६८ ॥

किं परस्य स गुणः समश्नुते
   पथ्यवृत्तिरपि यद्यरोगिताम् ॥ १४. १३ ॥

परवृद्धिमत्सरि मनो हि मानिनाम् ॥ १५. १ ॥

दयितं जनः खलु गुणीति मन्यते ॥ १५. १४ ॥

स्फुटमापदां पदमनात्मवेदिता ॥ १५. २२ ॥

सत्यनियतवचसं वचसा
   सुजनं जनाश्चलयितुं क ईशते ॥ १५. ४० ॥

प्रभुचित्तमेव हि जनोऽनुवर्तते ॥ १५. ४१ ॥

स्मर्तुमधिगतगुणस्मरणाः
   पटवो न दोषमखिलं खलूत्तमाः ॥ १५. ४३ ॥

न्यसनाय ससौरभस्य क-
   स्तरुसूनस्य शिरस्यसूयति ॥ १६. २० ॥

सुकुमारमहो लघीयसां
   हृदयं तद्गतमप्रियं यतः ।
सहसैव समुद्गिरत्यम्मी
   क्षपयन्त्येव हि तन्मनीषिणः ॥ १६. २१ ॥

उपकारपरः स्वभावतः
सततं सर्वजनस्य सज्जनः ।
असतामनिशं तथाप्यहो
गुरुहृद्रोगकरी तदुन्नतिः ॥ १६. २२ ॥
परितप्यत एव नोत्तमः
परितप्तोऽप्यपरः सुसंवृतिः ।
परवृद्धिभिराहितव्यथः
स्फुटनिर्भिन्नदुराशयोऽधमः ॥ १६. २३ ॥
अनिराकृततापसंपदं
फलहीनां सुमनोभिरुज्झिताम् ।
खलतां खलतामिवासतीं
प्रतिपद्येत कथं बुधो जनः ॥ १६. २४ ॥
अनुहुंकुरुते घनध्वनिं
न हि गोमायुरुतानि केसरी ॥ १६. २५ ॥
जितरोषरया महाधियः
सपदि क्रोधजितो लघुर्जनः ।
विजितेन जितस्य दुर्मते-
र्मतिमद्भिः सह का विरोधिता ॥ १६. २६ ॥
वचनैरसतां महीयसो
न खलु व्येति गुरुत्वमुद्धतैः ।

किमपैति रजोभिरैर्वरै-
रवकीर्णस्य मणेर्महार्घता ॥ १६. २७ ॥

परितोषयिता न कश्चन
स्वगतो यस्य गुणोऽस्ति देहिनः ।
परदोषकथाभिरल्पकः
स्वजनं तोषयितुं किलेच्छति ॥ १६. २८ ॥

सहजान्धदृशः स्वदुर्नये
परदोषेक्षणदिव्यचक्षुषः ।
स्वगुणोच्चगिरो मुनिव्रताः
परवर्णग्रहणेष्वसाधवः ॥ १६. २९ ॥

प्रकटान्यपि नैपुणं मह-
त्परवाच्यानि चिराय गोपितुम् ।
विवरीतुमथात्मनो गुणा-
न्भृशमाकौशलमार्यचेतसाम् ॥ १६. ३० ॥

किमिवाखिललोककीर्तितं
कथयत्यात्मगुणं महामनाः ।
वदिता न लघीयसोऽपरः
स्वगुणं तेन वदत्यसौ स्वयम् ॥ १६. ३१ ॥

महतस्तरसा विलङ्घय-
न्निजदोषेण कुधीर्विनश्यति ।

कुरुते न खलु स्वयेच्छया
शलभानिन्धनमिद्धदीधितिः ॥ १६. ३५ ॥

विविनक्ति न बुद्धिदुर्विधः
स्वयमेव स्वहितं प्रथग्जनः ।
यदुदीरितमप्यदः परै-
र्न विजानाति तदद्भुतं महत् ॥ १६. ३९ ॥

विदुरेष्यदपायमात्मना
परतः श्रद्दधतेऽथवा बुधाः ।
न परोपहितं न च स्वतः
प्रमिमीतेऽनुभवादृतेऽल्पधीः ॥ १६. ४० ॥

उपदेशपराः परेष्वपि
स्वविनाशाभिमुखेषु साधवः ॥ १६. ४१ ॥

अथवाभिनिविष्टबुद्धिषु
व्रजति व्यर्थकतां सुभाषितम् ॥ १६. ४३ ॥

घनाम्बुभिर्बहुलितनिम्नगाजलै-
र्जलं न हि व्रजति विकारमम्बुधेः ॥ १७. १८ ॥

पयस्यभिद्रवति भुवं युगावधौ
सरित्पतिर्न हि समुपैति रिक्तताम् ॥ १७ ४० ॥

अरुच्यमपि रोगघ्नं निसर्गादेव भेषजम् ॥ १९. ८९ ॥

साधने हि नियमोऽन्यजनानां

योगिनां तु तपसाखिलसिद्धिः ॥ ५. ३ ॥

कर्म कः स्वकृतमत्र न भुङ्क्ते ॥ ५. ६ ॥

यावदर्हकरणं किल साधोः

प्रत्यवायधुतये न गुणाय ॥ ५. ९ ॥

आकरः स्वपरभूरिकथानां

प्रायशो हि सुहृदोः सहवासः ॥ ५. १२ ॥

पूर्वपुण्यविभवव्ययलब्धाः

संपदो विपद एव विमृष्टाः ।

पात्रपाणिकमलार्पणमासां

तासु शान्तिकविधिर्विधिदृष्टः ॥ ५. १७ ॥

....................विवेक-

प्रोञ्छनाय विषये रससेकः ॥ ५. ३६ ॥

उत्तरोत्तरशुभो हि विभूनां

कोऽपि मञ्जुलतमः क्रमवादः ॥ ५. ३७ ॥

वर्त्म कर्षतु पुरः परमेक-

स्तद्गतानुगतिको न महार्घः ॥ ५. ५५ ॥

मौनं काचिदथवास्ति निरूढा

सैव सा चरति यत्र हि चित्तम् ॥ ५. ५७ ॥

 613

तं धिगस्तु कलयन्नपि वाञ्छा-

मर्थिवाग्अवसरं सहते यः ॥ ५. ८३ ॥

प्रापितेन चटुकाकुविडम्बं

लम्भितेन बहुयाचनलज्जाम् ।

अर्थिना यदघमर्जति दाता

तन्न लुम्पति विलम्ब्य ददानः ॥ ५. ८४ ॥

यत्प्रदेयमुपनीय वदान्यै-

र्दीयते सलिलमर्थिजनाय ।

याचनोक्तिविफलत्वविशङ्का-

त्रासमूर्च्छितचिकित्सितमेतत् ॥ ५. ८५ ॥

अर्थिने न तृणवद्धनमात्रं

किन्तु जीवनमपि प्रतिपाद्यम् ।

एवमाह कुशवज्जलदायी

द्रव्यदानविधिरुक्तिविदग्धः ॥ ५. ८६ ॥

पङ्कसंकरविगर्हितमर्हे

न श्रियः कमलमाश्रयणाय ।

अर्थिपाणिकमलं विमलं त-

द्वासवेश्म विदधीत सुधीस्तु ॥ ५. ८७ ॥

याचमानजनमानसवृत्तेः

पूरणाय बत जन्म न यस्य ।

तेन भूमिरतिभारवतीयं
न द्रुमैर्न गिरिभिर्न समुद्रैः ॥ ५. ८८ ॥

मा धनानि कृपणः खलु जीवं-
स्तृष्णयार्पयतु जातु परस्मै ।
तत्र नैष कुरुते मम चित्रं
यत्तु नार्पयति तानि मृतोऽपि ॥ ५. ८९ ॥

लोक एष परलोकमुपेता
हा विहाय निधने धनमेकः ।
इत्यमुं खलु तदस्य निनीष-
त्यर्थिबन्धुरुदयद्दयचित्तः ॥ ५. ९१ ॥

दानपात्रमधमर्णमिहैक-
ग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्तुं
पारलौकिककुसीदमसीदत् ॥ ५. ९२ ॥

नास्ति जन्यजनकव्यतिभेदः ॥ ५. ९४ ॥

किं ग्रहा दिवि न जाग्रति ते ते
भास्वतस्तु कतमस्तुलयास्ते ॥ ५. १०० ॥

आर्जवं हि कुटिलेषु न नीतिः ॥ ५. १०३ ॥

दुर्जया हि विषया विदुषापि ॥ ५. १०९ ॥

याचितश्चिरयति क्व नु धीरः
 प्राणने क्षणमपि प्रतिभूः कः ।
शंसति द्विनयनी दृढनिद्रां
 द्राङ्निमेषमिषघूर्णनपूर्णा ॥ ५. १२६ ॥

अभ्रपुष्पमपि दित्सति शीतं
 सार्थिना विमुखता यदभाजि ।
स्तोककस्य खलु चञ्चुपुटेन
 म्लानिरुल्लसति तद्धनसङ्गे ॥ ५. १२७ ॥

......सुतः किल पितुः सादृश्यमन्विच्छति ॥ ५. १३६ ॥

स्वतः सतां ह्रीः परतोऽतिगुर्वी ॥ ६. २२ ॥

आकीटमाकैटभवैरि तुल्यः
 स्वाभीष्टलाभात्कृतकृत्यभावः ।
भिन्नस्पृहाणां प्रति चार्थमर्थं
 द्विष्टत्वमिष्टत्वमपव्यवस्थम् ॥ ६. १०६ ॥

पलालजालैः पिहितः स्वयं हि
 प्रकाशमासादयतीक्षुडिम्भः ॥ ८. २ ॥

पुण्ये मनः कस्य मुनेरपि स्या-
 त्प्रमाणमास्ते यदघेऽपि धावत् ।
तच्चिन्ति चित्तं परमेश्वरस्तु
 भक्तस्य हृष्यत्करुणो रुणद्धि ॥ ८. १७ ॥

मुग्धेषु कः सत्यमृषाविवेकः ॥ ८. १८ ॥

वाग्जन्मवैफल्यमसह्यशल्यं

गुणाद्भुते वस्तुनि मौनिता चेत् ॥ ८. ३२ ॥

बिम्बानुबिम्बौ हि विहाय धातु-

र्न जातु दृष्टातिसरूपसृष्टिः ॥ ८. ४६ ॥

विवेकधाराशतधौतमन्तः

सतां न कामः कलुषीकरोति ॥ ८. ५४ ॥

नामापि जागर्ति हि यत्र शत्रो-

स्तेजस्विनस्तं कतमे सहन्ते ॥ ८. ७४ ॥

पिपासुता शान्तिमुपैति वारिजा

न जातु दुग्धान्मधुनोऽधिकादपि ॥ ९. ५ ॥

गरौ गिरः पल्लवनार्थलाघवे

मितं च सारं च वचो हि वाग्मिता ॥ ९. ८ ॥

महाजनाचारपरम्परेदृशी

स्वनाम नामाददते न साधवः ॥ ९. १३ ॥

जनः किलाचारमुचं विगायति ॥ ९. १३ ॥

स्वभावभक्तिप्रवणं प्रतीश्वराः

कया न वाचा मुदमुद्गिरन्ति वा ॥ ९. २६ ॥

अकाञ्चनेऽकिंचननायिकाङ्के

किमारकूटाभरणेन न श्रियः ॥ ९. २८ ॥

पृषत्किशोरी कुरुतामसंगतां

कथं मनोवृत्तिमपि द्विपाधिपे ॥ ९. २९ ॥

मृणालतन्तुच्छिदुरा सतीस्थिति-

र्लवादपि त्रुट्यति चापलात्किल ॥ ९. ३१ ॥

निषिद्धमप्याचरणीयमापदि

क्रिया सती नावति यत्र सर्वथा ।

घनाम्बुना राजपथे हि पिच्छिले

क्वचिद्बुधैरप्यपथेन गम्यते ॥ ९. ३६ ॥

क वा निधिर्निर्धनमेति किं च तं

स वा कवाटं घटयन्निरस्यति ॥ ९. ३९ ॥

अनुग्रहादेव दिवौकसां नरो

निरस्य मानुष्यकमेति दिव्यताम् ।

अयोधिकारे स्वरितत्वमिष्यते

कुतोऽयसां सिद्धरसस्पृशामपि ॥ ९. ४२ ॥

........न्याय्यमुपेक्षते हि कः ॥ ९. ४६ ॥

चकास्ति योग्येन हि योग्यसंगमः ॥ ९. ५६ ॥

सुरेषु विघ्नैकपरेषु को नरः

करस्थमप्यर्थमवाप्तुमीश्वरः ॥ ९. ८३. ॥

जनानने कः करमर्पयिष्यति ॥ ९. १२५. ॥

न वस्तु दैवस्वरसाद्विनश्वरं
    सुरेश्वरोऽपि प्रतिकर्तुमीश्वरः ॥ ९. १२६ ॥
सतां हि चेतःशुचितात्मसाक्षिका ॥ ९. १२९ ॥
उदेति दोषादपि दोषलाघवं
    कृशत्वमज्ञानवशादिवैनसः ॥ ९. १३२ ॥
न मोघसंकल्पधराः किलामराः ॥ ९. १४५ ॥
लघौ लघावेव पुरः परं बुधै-
    र्विधेयमुत्तेजनमात्मतेजसः ।
तृणे तृणेढि ज्वलनः खलु ज्वल-
    न्क्रमात्करीषद्रुमकाण्डमण्डलं ॥ ९. १५२ ॥
जातौ न वित्ते न गुणे न कामः
    सौन्दर्य एव प्रवणः स वामः ॥ १०. १३ ॥
स्वाभाविकात्कृत्रिममन्यदेव ॥ १०. १९ ॥
आत्मापकर्षे सति मत्सराणां
    द्विषः परस्पर्धनया समाधिः ॥ १०. ४२ ॥
गुणेन केनापि जनेऽनवद्ये
    दोषान्तरोक्तिः खलु तत्खलत्वम् ॥ १०. ४३ ॥
यः स्पर्धया येन निजप्रतिष्ठां
    लिप्सुः स एवाह तदुन्नतत्वम् ।

कः स्पर्धितुः स्वाभिहितस्वहानेः

स्थानेऽवहेलां बहुलां न कुर्यात् ॥ १०. ४९ ॥

स्वतःप्रकाशे परमात्मबोधे

बोधान्तरं न स्फुरणार्थमर्थ्यम् ॥ १०. ६२ ॥

एकाम्बुबिन्दुव्ययमम्बुराशेः

पूर्णस्य कः शंसति शोषदोषम् ॥ १०. ६४ ॥

विधेरहो वाञ्छितविघ्नयत्नः ॥ १०. १०० ॥

अन्यानपेक्षितविधौ न खलु प्रधान-

वाचां भवत्यवसरः सति भव्यभृत्ये ॥ ११. ३४ ॥

दैवे निरुन्धति निबन्धनतां वहन्ति

हन्त प्रयासपरुषाणि न पौरुषाणि ॥ ११. ५५ ॥

अन्यानुरागविरसेन विलोकनाद्वा

जानामि सम्यगविलोकनमेव रम्यम् ॥ ११. ९३ ॥

सुज्ञं प्रतीङ्गितविभावनमेव वाचः ॥ ११. १०१ ॥

किं न द्रुमा जगति जाग्रति लक्षसंख्या-

स्तुल्योपनीतपिककाकफलोपभोगाः ।

स्तुत्यस्तु कल्पविटपी फलसंप्रदानं

कुर्वन्स एष विबुधानमृतैकवृत्तीन् ॥ ११. १२५ ॥

सतां महत्संमुखधावि पौरुषम् ॥ १२. ८ ॥

सिते हि जायेत शितेः सुलक्षता ॥ १२. २२ ॥

जन्मान्तराधिगतकर्मविपाकजन्मै-
  वोन्मीलति क्वचन कस्यचनानुरागः ॥ १३. ३९ ॥

यस्येश्वरेण यदलेखि ललाटपट्टे
  तत्स्यादयोग्यमपि योग्यमपास्य तस्य ॥ १३. ५० ।

नार्कातपैर्जलजमेति हिमैस्तु तापम् ॥ १३. ५० ॥

प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये
  विलसति चरमेऽनुप्रासभासां विलासः ॥ १३. ५४

सुरेषु हि श्रद्दधतां नमस्या
  सर्वार्थसिद्धयुचक्रमिथःसमस्या ॥ १४. ३ ॥

सुपर्वणां हि स्फुटभावना या
  सा पूर्वरूपं फलभावनायाः ॥ १४. ७ ॥

स्वेनानलस्य स्फुटतां यियासोः
  फूत्कृत्यपेक्षा कियती खलु स्यात् ॥ १४. ८ ॥

देवा हि नान्यद्वितरन्ति किन्तु
  प्रसद्य ते साधुधियं ददन्ते ॥ १४. ९ ॥

प्रेत्यास्मि कीदृग्भवितेति चिन्ता
  सन्तापमन्तस्तनुते हि जन्तोः ॥ १४. ७४ ॥

आपो वहन्तीह हि लोकयात्रां
  यथा न भूतानि तथापराणि ॥ १४. ८३ ॥

अर्थो विनैवार्थनयोपसीद-
न्नाल्पोपि धीरैरवधीरणीयः ।
मान्येन मन्ये विधिना वितीर्णः
स प्रीतिदायो बहु मन्तुमर्हः ॥ १४. ८७ ॥

अदोषतामेव सतां विवृण्वते
द्विषां मृषादोषकणाधिरोपणाः ।
न जातु सत्ये सति दूषणे भवे-
दलीकमाधातुमवद्यमुद्यमः ॥ १५. ४ ॥

न लीढे धीरवैदग्धीं धीरगम्भीरगाहिनी ॥ १७. १२४

आहृता हि विषयैकतानता
ज्ञानधौतमनसं न लिम्पति ॥ १८. २ ॥

किं विदग्धमनसामगोचरः ॥ १८. ९१ ॥

कःस्वतन्त्रमनु नन्वनुयोगः ॥ २१. १०५ ॥

हेम नह्यति कियन्निजचीरे
काञ्चनाद्रिमधिगत्य दरिद्रः ॥ २१. ११८ ॥

आप्यायनाद्वा रुचिभिः सुधांशोः
शैत्यात्तमःकाननजन्मनो वा ।
यावन्निशायामथ घर्मदुःस्थ-
स्तावद्व्रजत्यह्नि न शब्दपान्थः ॥ २२. ११० ॥

प्रवृत्तयोऽप्यात्ममयप्रकाशा-
 न्नयन्ति न भ्रान्तिमदेहमाप्तान् ॥ २२. १२० ॥

## मेघसंदेशः ।

मेघालोके भवति सुखिनोऽप्यन्यथावृत्ति चेतः
 कण्ठाश्लेषप्रणयिनि जने किं पुनर्दूरसंस्थे ॥ १. ३ ॥

कामार्ता हि प्रकृतिकृपणाश्चेतनाचेतनेषु ॥ १. ५ ॥

याच्ञा मोघा वरमधिगुणे नाधमे लब्धकामा ॥ १. ६ ॥

आशाबन्धः कुसुमसदृशं प्रायशो ह्यङ्गनानां
 सद्यःपाति प्रणयि हृदयं विप्रयोगे रुणद्धि ॥ १. १० ॥

न क्षुद्रोऽपि प्रथमसुकृतापेक्षया संश्रयाय
 प्राप्ते मित्रे भवति विमुखः किं पुनर्यस्तथोच्चैः ॥ १. १७ ॥

सद्भावार्द्रः फलति न चिरेणोपकारो महत्सु ॥ १. १९ ॥

रिक्तः सर्वो भवति हि लघुः पूर्णता गौरवाय ॥ १. २० ॥

स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु ॥ १. २८ ॥

मन्दायन्ते न खलु सुहृदामभ्युपेतार्थकृत्याः ॥ १. ३८ ॥

आपन्नार्तिप्रशमनफलाः संपदो ह्युत्तमानाम् ॥ १. ५३ ॥

के वा न स्युः परिभवपदं निष्फलारम्भयत्नाः ॥ १. ५४ ॥

सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ॥ २. १७ ॥

प्रायः सर्वो भवति करुणावृत्तिरार्द्रान्तरात्मा ॥ २. ३० ॥

...................:सीमन्तिनीनां

कान्तोदन्तः सुहृदुपनतः संगमात्किंचिदूनः ॥ २. ३७

कस्यात्यन्तं सुखमुपनतं दुःखमेकान्ततो वा

नीचैर्गच्छत्युपरि च दशा चक्रनेमिक्रमेण ॥ २. ४६ ।

प्रत्युक्तं हि प्रणयिषु सतामीप्सितार्थक्रियैव ॥ २. ५१ ॥

केषां न स्यादभिमतफला प्रार्थनाभ्युन्नतेषु ॥ २. ५४ ॥

